॥ अथ श्रीमद्भागवतटिप्पणी विरोधोद्धारः प्रारभ्यते ॥

॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ मुख्यप्राणार्यशिष्येण नरहर्याख्यसूनुना ॥ विद्याधीशाभिधेनाद्यस्कंधपद्याविरोधिता ॥ साधिता श्रीनिवासार्यैर्लिख्यते हरिसिद्धये ॥ १ ॥ श्रीमन्मृगेंद्रास्यमनंतवासं वाङ्नारदंघ्र्यंचकंजोत्थनाभिं ॥ सांबागणेशधृगंकसश्रीप्राणेंदिरोरुं भगवंतमीडे ॥ २ ॥ श्रीमन्नृसिंहचरणार्पितचित्तयोगाद्दूरिकृताखिलसुसंशयात्मभृत्थं ॥ नत्वागुरुं च तदनुग्रहतोस्य तुष्टये संसाधयाम्यखिलभागवताविरोधं ॥ ३ ॥ श्रीभागवतभूयिष्ठान्विरोधाद्रीन्प्रतीयतः ॥ स्वदत्तबुद्धिवज्रेण छिनत्तुमाधवोहरिः ॥ ४ ॥ अथवा । श्रीवेदव्यासप्रणीतश्रीमद्भागवतशास्त्रे प्रतीताविरोधोद्दिधीर्षया श्रीगुरुहृद्गश्रीनृसिंहप्रेरितः श्रीनिवासस्तत्कृपाबलाद्यतते । तत्र प्रथमस्कंधे प्रथमाध्याये प्रथमश्लोकः ॥ कल त्रिसर्गो मृषेत्यनेन विश्वमिथ्यात्वं प्रतीयते । विश्वं सत्यमित्यादि श्रुतिभिः । विमतं सत्यं प्रमाणदृष्टत्वात् । इत्याद्यनुमानैः प्रत्यक्षेण च जगत्सत्यत्वं दृश्यते । अतो विरोधोऽत उच्यते ॥ जन्मादीति ॥ यतः । श्रीनारायणात् ॥ अस्य । विश्वस्य ॥ जन्माद्यष्टकं । ·उत्पत्तिस्थितिसंहारोनियतिर्ज्ञानमावृत्तिः । बंधो मोक्षश्च पुरुषाद्यस्मात्सहरिरेकराडिति स्कांदोक्तेः ॥ अन्वयात् । यतो वा इमानि भूतानि जायंत इत्यादि श्रुतिसमन्वयात् ॥ इतरतश्च । अहं सर्वस्य प्रभव इति भगवदुक्त्यात्मकागमानुगृहीतात् । विश्वं विष्णुकर्तृकं तदितराकार्यत्वे सति कार्यत्वात् । इत्यनुमानाच्च भवंतीति शेषः ॥ यद्वा ॥ अयः शुभावहो विधिरित्यभिधानात् । अनुगतः । अयः शुभावहविधिर्यस्य तस्मात् ॥ इतरतः । आत्मेतर सर्वाभिन्नात् एते उभे अपि यच्छब्दविशेषणे ॥ अथवा ॥ अन्वयात् । अन्वयशब्दोल्लेख्यनुमानसकाशात् ॥ इतरतः ॥ विलक्षणात् । विष्णुर्जगत्कर्ता स्वतंत्रचेतनत्वात् अस्मदादिववदिति केवलव्यातिरेक्यनुमानात् ॥ च शब्द एवार्थे । व्यतिरेकव्याप्त्यैवेति यावत् । उत वा । इव चित्रे स्मरे पुमानिति यादवकोशात् । इतरतः । इः आश्चर्यं तत् तरं अतिशयितं च तदत्याश्चर्यं तस्मात् । यतोऽस्य जन्मादि । अन्वयात् अनुगतमभूत् अनुज्ञानं यथा तथाऽभूदित्यर्थः ॥ अन्वयात् । क्रमादिति वाऽर्थः । तत्र हेत्वाकांक्षायां सार्वज्ञ्यरूपहेतुगर्भविशेषणेन विशिनष्टि ॥ अर्थेष्विति । यः अर्थेषु सर्वपदार्थेषु विषये साकल्येन ज्ञानवान् ॥ यद्वा ॥ अर्थाः पंचसंख्याकाः । ज्योतिः शास्त्रेऽभिहितत्वात् । इषवो बाणाः यस्येति स कामः तेन न भिद्यते न नश्यतीति अर्थेष्वभित् मुक्तगणः तं जानातीति स तथा । सृष्टिकाले मुक्तामुक्तमध्ये मुक्तान्ज्ञात्वा । अमुक्तानेव देहबद्धान्करोतीत्यर्थः । सार्वज्ञ्ये हेतुः ॥ स्वराडिति । स्वतंत्र इत्यर्थः । धनपतिर्वा । सुतरां अराट् नियंतृरहितो वा । परः स्वाहरुद्दाम इति नामचतुष्टयं । विष्णोर्गुह्यं तु यो वेद स न पापैः प्रलिप्यत इति भागवततात्पर्योक्तेः । स्वेति नाम्ना शोभमानो वा ॥ यद्वा ॥ सुतरां अरं शीघ्रं अटति गच्छतीति । अट्

गतौ । अलोपो निरुक्तत्वात् । मनसो जवीय इति श्रुतेः । सुखराजो वा । स्वातंत्र्यशोभितो वा । स्वभक्तशोभाकरो वा । इदं सर्वं चतुर्मुख एवोत्पन्नं । तथा प्रसिद्धेरित्याशंक्य तस्यापि गुरुत्वेन विशिनष्टि ॥ तेन इति । यश्च ॥ आदिकवये । प्रथमज्ञानिने ॥ यद्वा ॥ आदौ सर्गे ज्ञानवते ॥ अथवा ॥ अः परं ब्रह्म इति श्रुतेः । आदिः कारणं यस्येति आदिः । कविर्ज्ञानी च तस्मै । उत वा । आदेः स्वकारणादेव कं सुखं वयति प्राप्नोतीति । वी गत्यादौ निरुक्तत्वात् ह्रस्वत्वं तस्मै ब्रह्मणे ॥ हृदा । स्नेहेन ॥ ब्रह्म । सर्ववेदजातं ॥ तेने । विस्तारितवान् । वक्तव्यं ब्रह्म गुरुणा चतुर्वारमथापि वेत्युपदेशानुसारेण चतुर्वारमुपदिदेशेत्यर्थः ॥ यद्वा ॥ ब्रह्मणश्चतुर्मुखत्वेन चतुर्वेदानां युगपद्ग्रहणसामर्थ्यमन्वीक्ष्य सहस्रमुखत्वेप्येकेनैव मुखेन युगपदुपदेश एव विस्तार इति मत्वा तथोपदिदेश । अनेनापि हरेर्ब्रह्मणोऽधिकशक्तिमत्त्वं सूचितं । वेदाहमेतं पुरुषं महांतमिति श्रुतौ ब्रह्मोक्त्या तद्विषयज्ञानस्य सिद्धत्वात् । उपदेशस्य नैरर्थक्यमित्याशंक्य हृदेत्यस्य तात्पर्यं द्योतयंस्तत्प्रसादमंतरेण तस्य दुर्ज्ञेयत्वमाह ॥ मुह्यंतीति ॥ सूरयोऽपि । ज्ञानिनोऽपि ॥ यं प्राति । यमुद्दिश्येत्यर्थः ॥ मुह्यंति । न जानंति । यत्प्रसादं विनेति शेषः । यमेवैष वृणुते तेन लभ्य इति श्रुतेः । ननु यं सूरय इति पाठः प्रक्षिप्तः । यत्सूरय इत्युपलंभात् । न च वैपरत्येन वक्तुं शक्यं । मुह्यतेरकर्मकत्वेन द्वितीयाया अनान्वितत्वात् । यदित्यस्य तु अव्ययत्वेनांगीकारेण सप्तम्यर्थत्वोपपत्तेरिति चेन्न । मुह्यतेरकर्मकत्वादेव द्वितीयाविभक्त्यर्थस्य प्रतीतिसूचितत्वेन तस्योद्दिश्येति ल्यबंतार्थकत्वात् । प्रति शब्दस्योद्दिश्येत्यर्थकल्पनेऽश्रुतकल्पनप्रसंग इति चेन्न । कृतांजलिपुटान्येव प्रधानं तं हरिं प्रतीत्यत्र तादृशार्थस्य श्रतत्वात् । अनुव्याख्याने । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलं । ऊर्ध्वरेतं विरूपाक्षं शंकरं नीललोहितं । इति तापनीयवाक्यस्य । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलं । विष्ण्वाख्यमुक्तमन्यत्र ह्यूर्ध्वरेतं च तत्प्रति । विरूपाक्षाख्यमपरं ब्रह्माख्यं तद्व्रते स्थितं । ऋतं सत्यं परं ब्रह्मेत्याद्युद्दिश्य द्वितीयका विभक्तिरूर्ध्वरेतादिः प्रथमा रुद्रगोचरेति व्याख्याने प्रतिशब्दस्योद्दिश्येति ल्यबंतार्थकत्व प्रतीतेः । किंचात्र यच्छब्दचतुष्टये द्वयोरव्ययत्वेन लिंगाज्ञानेऽपि एकस्य पुल्लिंगत्वेनावशिष्टस्य विमतस्य पुल्लिंगत्वौचित्यात् नपुंसकत्वांगीकारे कल्पनागौरवं च । तथा हि । विमतस्य यदिति कल्पनं । तस्य चाव्ययत्वकल्पनं । तस्य च सप्तम्यर्थकत्वकल्पनं । तस्य च विषयार्थकत्वकल्पनामिति । नात्र तथा । विमतस्य यमिति कल्पनं । तस्य च प्रत्यर्थकत्वकल्पनं । तस्य चोद्दिश्येत्यर्थकल्पनामिति लाघवात् । अंगीकृत्य चेदमुक्तं । वस्तुनस्तु । उक्तरीत्या प्रामाणिकत्वेन तदसंभवात् । जीर्णपुस्तककोशेष्वादृशपाठस्यैवोपलब्धेश्च । किंच यथास्मिन्ब्रह्मणि सूरयोपि मुह्यंतीत्यंगीकारेऽत्र ब्रह्मशब्देन किं वेदो गृह्यते । अथवा परं ब्रह्म । आद्येऽयं वेदोऽस्ति न वेति मोहो वा स्वरवर्णक्रमविषयो-

मोहो वा । उभयथापि सूरिमोहप्राप्तौ परिशुद्धवेदानुपलंभप्रसंगात् । सूरिमोहकथनेन कैमुत्यादज्ञमोहोऽगीक्रियते । अथवाऽज्ञमोहाभावः । नाद्यः । वेदस्य निरधिकारित्वप्रसंगात् । न द्वितीयः । इति वक्तुरुपहासास्पदत्वापातात् । न हि सुज्ञाऽज्ञातमज्ञो जानातीति युक्तं । न द्वितीयः । तद्ब्रह्मादिकवये तेन इति विस्तारानुपपत्तेः । कर्तृकर्मणोरेकत्वापत्त्या आत्मानामिति वक्तव्ये ब्रह्मशब्दोक्तेरसंगतत्वात् । यो वै वेदांश्च प्राहिणोति तस्मा इति श्रुतिविरोधाच्च । न चास्मत्पक्षे निरधिकारित्वप्रसंगः । जानंतोऽपि न जानंति मेरो रूपं विपश्चित इतिवत्साकल्येनाज्ञेयत्वेऽपि एकदेशेन ज्ञेयत्वांगीकारात् । तस्माद्यामित्येव पाठः साधुः । एवं हेतुपरंपरया भगवतो जगत्स्रष्टृत्वादौ सिद्धे सासृष्टिः भगवता किं प्रयोजनमुद्दिश्य क्रियते । अथवाऽनुद्दिश्य । नाद्यः । सृष्टेः पूर्वं तत्फलस्योनतया पूर्णत्वानुपपत्तेः । न द्वितीयः । प्रेक्षावत्प्रवृत्त्यनुपपत्तेः । न हि प्रेक्षावान्निष्फले प्रवर्तते । इत्याशंक्य स्वभावादेव सृष्ट्यादौ प्रवृत्तिरित्याशयेन द्वितीयपक्षमंगीकरोति ॥ तेज इति । तेजसो विनिमयः। दीपाद्दीपांतरोत्पत्तिः । वारिणो विनिमयः । प्रतिबिंबोत्पत्तिः। मृदो विनिमयः । कुलालकृतघटादिः । यथा तद्वत् ॥ त्रिसर्गः । ईशजीवजडसर्गः । ईशसर्गोऽवताररूपो दीपाद्दीपांतरवत् । जीवसर्गः प्रतिबिंबरूपो । वारिस्थप्रतिबिंबवत् । जडसर्गः प्रकृतिमुपादानीकृत्य महत्तत्त्वादिरूपो मृदमुपादानीकृत्य कुलालादिकृतघटादिवदित्यर्थः ॥ यत्र । भगवति ॥ मृषा । निरर्थकः । भित्वा मृषाऽश्रुरित्यत्र मृषाशब्दस्य नैरर्थ्यर्थकत्वदर्शनात् । न च मृषाशब्दो मिथ्यार्थकः । अनुपपत्तेः । तथा हि । मिथ्यात्वं चाभासासंभवति । शुक्तिरजतादौ तथा दृष्टत्वात् । आभासस्तु न केवलसद्रूपस्य । तथात्वे शशविषाणस्याप्याभासत्वप्रसंगात् । किंतु कुत्रचित्सत्त्वेन वर्तमानस्यैव रजतस्य शुक्तावभासः। न हि शशशृंगस्यापि कस्यचित्पुंस आभासः कदाऽपि केनचिद्दृष्टः । प्रकृते च जगन्मिथ्यात्वसिध्यर्थमाभासोऽगीकार्यः स्यात् । तथा च तदर्थं यत्र क्वचिज्जगतः सत्यत्वमप्यवश्यमपेक्षितं । तद्भवता क्वोपलब्धं । यत्र क्वचिदुपलब्धं ब्रूषे तदा मिथ्यात्वासिद्धिः । यदि च नास्तीति ब्रूषे तदा आभासासंभवेनापि मिथ्यात्वासिद्धिः । किंच दृष्टांतानुपपत्तिरपि । तेजोवारिमृदां विनिमय इत्यत्र तेजसि वारिबुद्धिरित्याद्येव विनिमयशब्दार्थोऽगीकृतस्त्वया । तत्र वारिणस्तटाकादौ सत्यतया वर्तमानत्वेनाभाससंभवान्मिथ्यात्वासिद्धावपि दार्ष्टांतिके त्रिसर्गात्मकजगतः क्वापि सत्यताऽनुपलब्ध्या आभासासंभवेन मिथ्यात्वानुपपत्त्या साम्याभावात् । तर्हि त्रिसर्गसत्यत्ववादिनां भवतामपि दृष्टांतानुपपत्तिः स्यात्। दृष्टांतस्य मिथ्यात्वोपपादकत्वेन दार्ष्टांतिकस्य सत्यत्वाभ्युपगमे न साम्याभावादिति चेन्नैवं । विनिमयशब्दस्याभासतार्थानंगीकारात् । किंच तथात्वे सत्यपदानुपपत्तिश्च । यो हि कर्मणा आकृत्या वाचा चानृतत्वशून्यः स एव लोके सत्य इत्यभिधीयते । यत्कृतो यदधिकरणकश्च त्रिसर्गो मिथ्या स्यात् तदा कथं तस्य सत्यत्वं । न च यत्रेत्यनेना-

धिकरणमेवोक्तं न तु. कर्म । तत्कथमुच्यते तत्कृत इतीति वाच्यं । जन्माद्यस्य यत इतीह वाक्यसद्भावात् । किंच यदाधिकरणकः सर्गः केन कृतः । न स्वत इति शक्यते वक्तुं । जडस्य स्वतः प्रवृत्तिशून्यत्वात् । न शक्त्या । पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तेः काप्यदर्शनात् । अस्तु तत्सहायोऽन्यः पुरुष इति चेन्न । पुरुषद्वयांगीकारेणापसिद्धांतात् । तस्मादयमेव कर्तेत्यवश्यमंगीकार्यं । तथा च तत्कृतकर्मासत्यत्वे तस्याप्यसत्यत्वप्राप्तिः । ननु सत्यत्वं स्वरूपलक्षणं जगत्कारणत्वं तु तटस्थामिति नोक्त दोष इति चेन्न । नास्य लक्षणस्य तटस्थत्वं । यत्तत्परंज्योतिरनन्यमव्ययं स्वसंस्थयानित्यनिरस्तकिल्बिषं । ब्रह्माख्यमस्योद्भवनादिहेतुभिः स्वलक्षणैर्लक्षितभाव- निर्वृतं इति वाक्ये स्वशब्देन स्वरूपलक्षणत्वोक्तेः । नेदमुपपन्नं स्वादिशब्दस्यैवात्राभावादिति चेन्न । मायावादिमतानुयायिव्याख्या- नात्पूर्वभाव्यत्यंतजीर्णपुस्तककोशदर्शनेनोद्धापनिश्चयात् । यद्वा । जगत्कारणं माया तदाश्रयं ब्रह्मेति तटस्थलक्षणस्यार्थः स्यात् । ओमिति चेत् धाम्ना स्वेत सदा निरस्तकुहकामिति विशेषणमयुक्तं स्यात् । मायेत्यस्य कुहकामित्यपरपर्यायत्वात् । न कुहकाख्या माया किंतु ब्रह्मोपाहितत्वेन जगत्स्रष्ट्री काचन प्रकृत्याख्या स्त्रीति मन्यसे चेत् । सा किं सदातनोत निर्मिता । सदातनत्वेऽद्वैतभंगः । न च माया- दीनां षण्णामनादित्वांगीकारेण नास्मन्मतभंग इति वाच्यं । ब्रह्मैवेदमग्र आसीत् । एको नारायण आसीदित्यादि श्रुतिविरोधात् । द्वितीये च स्वयमुत्पन्नाऽथवा स्वतो ब्रह्मणा निर्मिता वा ब्रह्मणापि मायया निर्मिता । नाद्यः । अकारणकार्योत्पातिप्रसंगात् । न द्वितीयः । स्वरूपलक्षणासिद्धिप्रसंगात् । तृतीयेऽपि किं तयैव मायांतरेण वा । नाद्यः । आत्माश्रयप्रसंगात् । द्वितीयेऽनवस्थितेः । किंच जगत्का- रणत्वस्य स्वरूपत्वे कर्तृत्वापत्त्या निर्धर्मकत्वानुपपत्तिप्रसंगभयेन तटस्थत्वमंगीक्रियते । तस्य च सत्यत्वे भयस्य तदवस्थत्वात् । तस्या- सत्त्वमेवाभिप्रेतं । तथात्वेऽन्वयादितरतश्चेति विरुद्धं स्यात् । न हि श्रुतिस्मृत्यनुमानसिद्धस्यासत्त्वं प्रामाणिकैरंगीक्रियते । अस्य चायमर्थः । जगत्कारणत्वे श्रुतिस्मृतीनामन्वयात् उपक्रमादितात्पर्यलिंगात् । इतरतः । श्रुत्याद्यनुगृहीततर्काच्चेति । अन्वयव्यति- रेकार्थत्वेऽपि प्रमितस्यैव सिद्धिः । अन्यथाऽन्वयव्यतिरेकिणा धूमेनापि वन्हेरप्रमितत्वप्रसंगात् । तस्मात्तटस्थलक्षणानुपपत्तेः स्वरूप- लक्षणस्यैव सत्त्वेन त्रिसर्गस्य मिथ्यात्वांगीकारे सर्गरूपकर्मणोऽसत्यत्वापातेन सत्येति विशेषणस्यानुपपत्तिः सुस्थैव । किंच मृषाशब्दस्य मिथ्यात्वार्थांगीकारेऽर्थेष्विति पदस्यानुपपत्तिः । मायावाद्यनुमते भट्टकृतेऽधिगतार्थगंतृरूपे प्रमाणलक्षणेऽर्थशब्दस्य यथावस्थितार्थ- रूपार्थकत्वेनांगीकारात् । अन्यथा शुक्तिरजतज्ञानेऽतिव्याप्तेः । तथाऽर्थप्रतिभासोऽप्यज्ञानामेव न ज्ञानिनामिति चेन्न । अभिज्ञ इति विशेषणानुपपत्तेः । किंच प्रतिभासो नाम भ्रांतिः । अज्ञानिरूपितत्वात् । सा भ्रांतिः किं ब्रह्मण उतान्यस्य । नाद्यः । यः सर्वज्ञः

सर्वाविदिति श्रुतिव्याकोपात् । न द्वितीयः । तदभावात् । न चोपाधिसद्भावादन्यः शक्यकल्पनः । गुणत्रयसर्गकाले महदादीनामप्यसृष्टत्वे- नान्येषां सुतरामभावात् । सृष्टेव तदाऽन्यस्तस्यैव भ्रांतिः । निर्गुणादन्यत्वेन श्रुतिव्याकोपाभावाद्भ्रांतत्वोपपत्तिरिति चेन्न । यतः स्वसृ- ष्टस्य मायिकस्य स्वमायामोहितैरन्यैर्भ्रांतिदृष्टत्वेऽपि मायाविना तथा न दृश्यते । तदुक्तं । न च मायाविना माया दृश्यते विश्व- मीश्वरः । सदा पश्यति तेनेदं न मायेत्यवधार्यतां । अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवेत् । सर्वापरोक्षाविद्विष्णुर्विश्वदृक् तं न तन्मृषेति ब्रह्मांडे । ननूत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति स्मृतेः स्रष्टुरीश्वरस्याप्युत्तमत्वाभावेन संभवतु भ्रांतिदृष्टृत्वमिति चेन्न । स्वराडित्यनुपपत्तेः । सुतरां राट् नियंतृरहित इति तदर्थः । स्वप्रकाशार्थकत्वेऽपि स एव दोषः । अपि च भ्रांतिद्रष्टृत्वांगीकारे ब्रह्मगुरुत्वानुपपत्तिः । ब्रम्हणोऽपि भ्रांतत्वेन तद्गुरुत्वोपपत्तेरिति चेन्न । आदिकवय इत्यस्यानुपपत्तेः । भ्रांतिद्रष्टृत्वे च मुह्यंति सूरय इत्यस्यानुपपत्तिः । न हि ज्ञानिनोऽवांतरब्रह्मविषये मुह्यंति । तथात्वे सूरित्वानुपपत्तेः । तन्मोहविषयं तु मुख्यमेव ब्रह्म । तस्य भ्रांतिरित्यंगीकारे श्रुतिव्याकोपोऽपसिद्धांतश्च । तस्मान्न मृषाशब्दस्य मिथ्यार्थकत्वमिति सिद्धं । त्रिसर्गस्य सत्यत्वे पुनर्हेत्वंतरग- र्भितविशेषणमाह ॥ धाम्नेति ॥ तं ॥ स्वेन ॥ स्वरूपभूतेन ॥ धाम्ना ॥ ज्ञानमहिम्ना ॥ सदा । निरंतरं । निरस्तं कुहकं । इंद्रजालादि माया । येन स तथोक्तस्तं । लोके चासमर्थ इंद्रद्रजालादिकं सृजति । न तु समर्थः । विष्णुस्तु नित्यपरिपूर्ण- शक्तिः किमर्थं तत्कुर्यादिति भावः । तत्र हेतुमाह ॥ सत्यमिति । सत् दुःखाज्ञानगंधराहितत्वेनोत्तमं तिरानंदः यं ज्ञानं यस्य तं । सच्छब्द उत्तमं ब्रूयादानंदंतीतिवै वदेत् । येति ज्ञानं समुद्दिष्टं पूर्णानंददृशिस्तत इत्युक्तेः । अत एव ॥ परं सर्वोत्तमं । भगवंतं ॥ धीमहि । ध्यायेम । नन्वत्र प्रतिपाद्यो भगवदभिन्न एव व्यासः । तत्कथं मंगलपद्ये तद्ध्यानं प्रतिजज्ञे । स्वस्मादुत्तमस्य हि ध्यानादि- रूपमंगलं विघ्नविघातादि प्रयोजनं सर्वत्र दृष्टमित्यतो धीमहीति परस्मै पदं प्रायुंक्त । परशिक्षार्थमिदं ध्यानमिति भावः । अन्यथा धीमहे इत्यवक्ष्यत् । न च तादृशप्रयोगस्यासाधुत्वं । विद्महे धीमहे तथेति तंत्रसारगायत्रीमंत्रोद्धारे प्रयोगाभिधानात् । छांदसप्रयोगस्त्वस्य गाय- त्र्यर्थकत्वद्योतनायेति ध्येयं । उक्तं च गारुडे । अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः । गायत्रीभाष्यरूपोऽसौ वेदार्थपरिबृंहितः । पुराणानां साररूपः साक्षाद्भगवतोदितः । द्वादशस्कंधसंयुक्तः शतविच्छेदसंयुतः । ग्रंथोऽष्टादशसाहस्रः श्रीमद्भागवताभिध इति । शत- विच्छेदसंयुत इत्यस्यार्थः । शतविच्छेदसंयुत इत्यत्र समाने लोप इति सूत्रेण शत वि वि छेदेति स्थिते । शतानि च वि च वि च विवि । इदमव्ययं । अत्र बहुवचनांतः शब्दः शतत्रयार्थकः । अपर्यवसितबहुत्वस्य त्रित्वे पर्यवसानामिति न्यायात् । वेति वर्णस्यां

तस्थवर्णेषु चतुर्थत्वेन चतुर्थाको लक्ष्यते । स संकेतेनास्यास्तीति वि गणनमित्यर्थः । अन्य वि शब्दश्च तादृशः । एवं विर्वीत्यस्य चतुर्विंशत्संख्यार्थकत्वं सिध्यति । तस्मात् शत वि वि ( ३४४ )। चतुश्चत्वारिंशदधिकशतत्रयाध्यायवानित्यर्थः । तथाहि । प्रथमस्य विंशतिः (२०) । द्वितीयस्य दश (१०) । तृतीयस्य चतुस्त्रिंशत् ( ३४ )। चतुर्थस्यैकत्रिंशत (३१) । पंचमस्य चतुर्विंशतिः (२४)। षष्ठस्यैकोनविंशतिः ( १९ )। सप्तमस्य षोडशः ( १६ ) । अष्टमस्य द्वाविंशतिः ( २२ ) । नवमस्यैकाविंशतिः ( २१ ) । दशमस्य त्र्यधिकैकशतं ( १०३ ) । एकादशस्यैकत्रिंशत् (३१) । द्वादशस्य त्रयोदश (१३) । एवं मिलित्वा सर्वेऽध्यायाश्चतुश्चत्वारिंशदुत्तरशतत्रयमिता भवंतीति बोध्यं । एतद्ग्रंथप्रतिपाद्यस्यैव मंगले संक्षेपेण प्रतिपादितत्वात्तदर्थेन ब्रह्मसूत्रादीनां समानार्थकत्वे सिद्धे सर्वस्यापि ताद्विध्यं सिध्यतीति बोद्धव्यं । तथाहि ॥ जन्माद्यस्य यतोऽन्वयात् । यतो भगवतः सकाशात् । आद्यस्य सनत्कुमाराद्यवताराणां मूलभूतस्य पुरुषरूपस्य जन्म प्रादुर्भावः । प्रादुर्भावो हरेर्जनिरित्युक्तेः । यद्वा । आत् व्यासात् यस्य जन्म स शुकः । यतः । यदर्थं । यत्प्रीत्यर्थमिति यावत् ॥ अन्वयात् । अनुजगाम । परीक्षितं प्रतीति शेषः । इत्यर्थकेन जन्माद्यस्य यत इत्यनेन प्रथमस्कंधसंक्षिप्तार्थवर्णनं (१)॥ जगृहे पौरुषं रूपं भगवान्महदादिभिः । संभूतं षोडशकलमादौ लोकसिसृक्षयेत्यादेः । अथवा । तत्राभवद्भगवान्व्यासपुत्र इत्यादेस्तत्र प्रतिपादनात् । प्रकरणात्परीक्षिदिति कर्ता । तसेः सार्वविभक्तिकत्वात् । यतः यं भगवंतं अन्वयात् स्थूलसूक्ष्मधारणानुसारेण जानाति स । गत्यर्थानां ज्ञानार्थत्वात् । इत्यर्थकेन यतोऽन्वयादित्यनेन द्वितीयस्कंधार्थः ( २ ) ॥ इतरतश्चार्थेष्वभिज्ञ स्वराट् । वैयासकेरिति वचस्तत्त्वनिश्चयमात्मनः । उपधार्य मतिं कृष्णे औत्तरेयः सतिं व्यधादित्युक्तेः । यत इत्यनुवर्तनीयं । यतः यदाज्ञयेत्यर्थः । इते गमने रत उद्धवः । यद्वा । यतो यज्ज्ञानार्थं । यस्येति वा । इते गमने । ज्ञाने वा । रतो विदुरः । अथवा । इ विचित्रे स्मरे पुमानिति यादवकोशात् । इं विचित्ररूपां सृष्टिं तनोतीति इतो विष्णुस्तस्मिन् रतो ब्रह्मा यतः । अभूदिति शेषः । अथवा । यतो यः अतिविचित्रत्वादितरं वराहरूपं तनोतीति सः । उत वा । इतो यः इते सांख्यज्ञाने रतः कपिलोऽभूत् । इत्यर्थकेनेतरत इत्यनेन तृतीय स्कंधार्थः ( ३ ) । यः अर्थेषु अर्थनीयेषु अत्रिदक्षध्रुवपृथुप्रचेतसां कामेषु अभिज्ञः ज्ञानी । इत्यर्थकेनार्थेष्वभिज्ञ इत्यनेन चतुर्थस्कंधार्थः (४) ॥ स्वान् प्रियव्रतादिभक्तान् राजयतीत्यंतर्णीतणिच् । यद्वा । स्वेन ऋषभरूपेण । अथवा । स्वेषु स्वकीयेषु चतुर्दशभुवनेषु नवखंडेषु सप्तद्वीपेषु च राजते स तथा । इत्यर्थकेन स्वराडित्यनेन पंचमस्कंधार्थः (५) ॥ तेने ब्रह्महृदाय आदिकवये मुह्यंति यं सूरयः । आदिकवये दासीसंगात्पूर्वज्ञानिनेऽजामिलाय । आदिकवये आशब्दवाच्यो ब्रह्मा आदिः कारणं यस्य स आदिः । आकारस्तु

मोहो वा । उभयथापि सूरिमोहप्राप्तौ परिशुद्धवेदानुपलंभप्रसंगात् । सूरिमोहकथनेन कैमुत्यादज्ञमोहोऽङ्गीक्रियते । अथवाऽज्ञमोहाभावः। नाद्यः । वेदस्य निरधिकारित्वप्रसंगात् । न द्वितीयः । इति वक्तुरुपहासास्पदत्वापातात् । न हि सुज्ञाऽज्ञातमज्ञो जानातीति युक्तं । न द्वितीयः । तद्ब्रह्मादिकवये तेन इति विस्तारानुपपत्तेः । कर्तृकर्मणोरेकत्वापत्त्या आत्मानमिति वक्तव्ये ब्रह्मशब्दोक्तेरसंगतत्वात् । यो वै वेदांश्च प्राहिणोति तस्मा इति श्रुतिविरोधाच्च । न चास्मत्पक्षे निरधिकारित्वप्रसंगः । जानंतोऽपि न जानंति मेरो रूपं विपश्चित इतिवत्साकल्येनाज्ञेयत्वेऽपि एकदेशेन ज्ञेयत्वांगीकारात् । तस्माद्यमित्येव पाठः साधुः । एवं हेतुपरंपरया भगवतो जगत्स्रष्टृत्वादौ सिद्धे सासृष्टिः भगवता किं प्रयोजनमुद्दिश्य क्रियते । अथवाऽनुद्दिश्य । नाद्यः । सृष्टेः पूर्वं तत्फलस्योनतया पूर्णत्वानुपपत्तेः । न द्वितीयः । प्रेक्षावत्प्रवृत्त्यनुपपत्तेः । न हि प्रेक्षावान्निष्फले प्रवर्तते । इत्याशंक्य स्वभावादेव सृष्ट्यादौ प्रवृत्तिरित्याशयेन द्वितीयपक्षमंगीकरोति ॥ तेज इति । तेजसो विनिमयः। दीपाद्दीपांतरोत्पत्तिः । वारिणो विनिमयः । प्रतिबिंबोत्पत्तिः। मृदो विनिमयः । कुलालकृतघटादिः । यथा तद्वत् ॥ त्रिसर्गः । ईशजीवजडसर्गः । ईशसर्गोऽवताररूपो दीपाद्दीपांतरवत् । जीवसर्गः प्रतिबिंबरूपो । वारिस्थप्रतिबिंबवत् । जडसर्गः प्रकृतिमुपादानीकृत्य महत्तत्त्वादिरूपो मृदमुपादानीकृत्य कुलालादिकृतघटादिवदित्यर्थः ॥ यत्र । भगवति ॥ मृषा । निरर्थकः । भित्वा मृषाऽश्रुरित्यत्र मृषाशब्दस्य नैरर्थ्यकयार्थकत्वदर्शनात् । न च मृषाशब्दो मिथ्यार्थकः । अनुपपत्तेः । तथा हि । मिथ्यात्वं चाभासात्संभवति । शुक्तिरजतादौ तथा दृष्टत्वात् । आभासस्तु न केवलसद्रूपस्य । तथात्वे शशविषाणस्याप्याभासत्वप्रसंगात् । किंतु कुत्रचित्सत्त्वेन वर्तमानस्यैव रजतस्य शुक्ताववभासः। न हि शशशृंगस्यापि कस्यचित्पुंस आभासः कदाऽपि केनचिद्दृष्टः । प्रकृते च जगन्मिथ्यात्वसिध्यर्थमाभासोऽङ्गीकार्यः स्यात् । तथा च तदर्थं यत्र क्वचिज्जगतः सत्यत्वमप्यवश्यमपेक्षितं । तद्भवता क्वोपलब्धं । यत्र क्वचिदुपलब्धं ब्रूषे तदा मिथ्यात्वासिद्धिः । यदि च नास्तीति ब्रूषे तदा आभासासंभवेनापि मिथ्यात्वासिद्धिः । किंच दृष्टांतानुपपत्तिरपि । तेजोवारिमृदां विनिमय इत्यत्र तेजसि वारिबुद्धिरित्याद्येव विनिमयशब्दार्थोऽङ्गीकृतस्त्वया । तत्र वारिणस्तटाकादौ सत्यतया वर्तमानत्वेनाभाससंभवान्मिथ्यात्वासिद्धावपि दार्ष्टांतिके त्रिसर्गात्मकजगतः क्वापि सत्यताऽनुपलब्ध्या आभासासंभवेन मिथ्यात्वानुपपत्त्या साम्याभावात् । तर्हि त्रिसर्गसत्यत्ववादिनां भवतामपि दृष्टांतानुपपत्तिः स्यात्। दृष्टांतस्य मिथ्यात्वोपपादकत्वेन दार्ष्टांतिकस्य सत्यत्वाभ्युपगमे न साम्याभावादिति चेन्नैवं । विनिमयशब्दस्याभासतार्थानंगीकारात् । किंच तथात्वे सत्यपदानुपपत्तिश्च । यो हि कर्मणा आकृत्या वाचा चानृतत्वशून्यः स एव लोके सत्य इत्यभिधीयते । यत्कृतो यदधिकरणकश्च त्रिसर्गो मिथ्या स्यात् तदा कथं तस्य सत्यत्वं । न च यत्रेत्यनेना-

यत्रेत्यनुकर्षणीयं। यं परमुद्दिश्य यत्र ब्रह्माणि सूरयः पंडिताभासाः युक्त्याभासैर्विरुद्धाभासैरन्यार्थश्रुतिभिः। युक्त्याभासोपेतान्यार्थश्रुतिभिश्च। विपरीतज्ञानादिति शेषः। मुह्यंति मुख्यार्थं न जानंति। तद्ब्रह्म वेदं। आदिकवये हृदाय तेने अस्य ब्रह्मेत्यनेनापौरुषेयत्वस्य। आदिंकवये इत्यनेन श्रोत्रानुकूल्यस्य। हृदायेत्यनेन प्रसंगानुकूल्यस्य विप्रलंभाभावस्य वा। यस्तेने इत्यनेन वक्त्राद्यानुकूल्यस्य सूचनेन महाप्रामाण्यसिद्ध्या निर्दोषत्वेन तदर्थभूतस्य विष्णोरपि निर्दोषत्वप्रदर्शनात्॥ २ ॥ तृतीयाध्यायार्थस्तेजोवारित्यादिना तेजोवारिमृदां विनिमयः कार्यभूतः। तेजोबन्नात्मको नृदेहो यथा साधनभूतः। एवं त्रयाणां वैराग्यभक्त्युपासनानां सर्ग उत्पत्तिर्यस्मात्स त्रिसर्गो ज्ञानयोगः। यत्र भगवद्विषयेऽमृषा व्यर्थो न भवंति किंतु साधनभूत इत्यर्थप्रदर्शनात् ॥ ३ ॥ चतुर्थाध्यायार्थः धाम्नेत्यादिना। स्वे मनुष्यरूपाभक्ताः इनाः स्वामित्वेन देवरूपभक्ताः। तेभ्यः साद्यते प्राप्यते दीयत इतियावत्। तेन सदा। अंतर्णीतण्यर्थात्। षदॢ विशरणगत्यवसादनेष्विति धातोः। तादृशेन धाम्ना स्वधामदाननिमित्तेनेति यावत्। निरस्तं कुहकं कर्मबंधपुनरावर्तनादिदोषजालं येन तमित्यर्थकेन फलप्रदर्शनादिति ॥ ४ ॥ अपि च भारतार्थनिरूपणमप्यनेनैव क्रियते। तदित्थं। जन्माद्यस्य यतः। आद्यश्च सर्वस्रष्टुर्वक्षणश्च आशब्दवाच्यो ब्रह्मा आदिः आवेशनिमित्तेन कारणं यस्य स आदिः सोमः। आकारस्तु पितामह इत्युक्तेः। समाने दीर्घ इति च। आत्मेशब्रह्मसंभवानित्यत्र तात्पर्योक्तेश्च। तस्यायमाद्यः सोमवंश इत्यर्थः। तस्य वा यतो भगवतः सकाशात् जन्म उत्पत्तिः। इत्यर्थकेन जन्माद्यस्य यत इत्यनेनादिपर्व विवृतं ॥१॥ यो भगवान् अन्वयात्। वनं गंतुं पांडवाननुजज्ञे। अय गतौ। गत्यर्थानां ज्ञानार्थत्वात्। अनेन सभापर्व ॥ २ ॥ ॥ इतरतः। या इतरतः इताः वनं गताः पांडवाः रताः यस्मिन्स तथा। अनेनारण्यपर्व ॥ ३ ॥ अर्थेष्वभिज्ञः। अर्थं राज्यरूपपुरुषार्थं इषंति इच्छंति तेऽर्थेषवः पांडवाः तान्गुप्तरूपानपि अभिजानातीति स तथा अनेन विराटपर्व ॥ ४ ॥ स्वराट्। स्वान्भक्तान्पांडवान्युद्धसामग्रीसंपादनेन राजयतीति स तथा। अत्रांतर्णीतणिच्। अनेनोद्योगपर्व ॥ ५ ॥ तेने ब्रह्म हृदाय आदिकवये मुह्यंति यं सूरयः। यश्चादिकवये पूर्वरूपे ज्ञानिने भीष्माय द्रोणाय कर्णाय च ब्रह्मविद्यां परशुरामरूपेण तेने उपदिदेश। ते भीष्मादयः। ये च हृदाः हृञ् हरणे दोऽवखंडने उभाभ्यां डः प्राणहराः शरीरखंडकाः शल्यद्रौणिकृपकृतवर्मादयः ते सर्वे सूरयोऽपि ज्ञानिनः संतोऽपि। यं दृष्ट्वा मुह्यंति स्म। अनेन भीष्मद्रोणकर्णशल्यसौप्तिकपर्वाणि ॥ ६–७–८–९–१० ॥ तेजोवारिमृदां यथा विनिमयः। तेजसां तन्मयत्वाच्चक्षुषां संबंधिवारीणि अश्रूणि तेषां मृदो.मह्याश्च विनिमयो मिश्रीभावः। हतस्त्रीणां धृतराष्ट्रस्य च भुव्यश्रपात इत्यर्थः। यद्वा। तेजसां तेजोमयलोकानां वारिणां तिलोदकानां मृदां क्रिमिविट्

भस्मरूपाणां मृत्तिकानां विनिमयः यथायोग्यं विनियोगः यथाऽयस्कृतिप्रकारकः । अनेन स्त्रीपर्व ॥ ११ ॥ यत्र यद्विषये त्रिसर्गः त्रयाणां मोक्षापद्राजधर्माणां सर्गो वाग्विसर्गः । अमृषा सफलः यत्प्रापक इत्यर्थः । अनेन शांतिपर्व ॥ १२ ॥ धाम्ना स्वेन । यश्च स्वेन स्वकीयेन धाम्ना राज्यस्थयुधिष्ठिरहृदयरूपेण स्थानेन उपलक्षितः । अनेनानुशासनपर्व ॥ १३ ॥ निरस्तकुहकं । निरस्ताः अश्वमेधानीमित्तेन पराजिताः कुहकाः कपटिनो राजानो येन तं । यद्वा । निरस्तं कुहकं युद्धे वधनिमित्तं पापं येन तं । अनेनाश्वमेधिकपर्व ॥ १४ ॥ ॥ सत्यं । सत् निर्दोषं स्थानं यथायोग्यं यापयति प्रापयति धृतराष्ट्रं यादवान्स्वात्मानं चेति तथाविधं । अनेन व्यासाश्रममौसल पर्वणी ॥१५–१६ ॥ परं । परं पृथ्वीविलक्षणं स्थानं । गमकमिति शेषः । अनेन महाप्रास्थानिकस्वर्गारोहणपर्वणीति ॥ १७–१८ ॥ उत च । गायत्र्या अपि भाष्यरूपत्वमस्येति । तच्चेत्थं ॥ परं । व्याप्त्यर्थकस्य तदित्यस्य व्याख्यानं परमिति । पूर्णार्थकत्वेन पर्यायरूपत्वात् ॥ १ ॥ जन्माद्यस्य यतोऽन्वयादितरतश्च । सवितुरित्यस्य ॥ २ ॥ धाम्ना स्वेन सदा निरस्तकुहकं सत्यं । सेव्यत्वार्थकवरेण्यशब्दस्य हेतुभूतनिर्दोषत्वगुणपूर्णत्वरूपगुणप्रतिपादकं । धाम्ना स्वेन सदा निरस्तकुहकं सत्यं चेति॥ ३॥ भृञ् भरणे गम्लृ गतावित्येताभ्यां पोषणज्ञानार्थकभर्गशब्दस्य आद्य स्वराडिति । स्वानां भक्तानां रंजकत्वेन पोषक इत्यर्थकत्वात् । द्वितीय अर्थेष्वभिज्ञ इति । व्याख्येयं गत्यर्थानां ज्ञानार्थकत्वात् ॥ ४ ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोमृषा । दिवु क्रीडा विजिगीषा व्यवहारस्तुति मोद मद स्वप्न कांति गतिष्विति धातोः क्रीडार्थकस्य देवशब्दस्य तेजोवारीत्यादि । एतत्त्रिसर्गकरणं क्रीडयैव न प्रयोजनार्थमित्यर्थकत्वात् ॥५॥ मुह्यंति यं सूरयः । अंतर्णीताणिचा स्वप्नार्थकस्य तस्यैव व्याख्यानं मुह्यंतीति । स्वविषये स्वापरपर्यायमोहप्रापकः स एवेति तात्पर्यार्थकत्वात् ॥ ६ ॥ तेने ब्रह्म हृदाय आदिकवये । न इत्यस्य बहुवचनेन ब्रह्मादिसर्वचेतनार्थकत्वात् । धीशब्दस्य लक्षणया ज्ञानसाधनार्थकत्वात् । तद्बहुवचनस्य वेदादिप्रमाणत्रयार्थकत्वात् । प्रचोदयादित्यस्य प्रेरणरूपोपदेशार्थकत्वात् तृतीय पादार्थस्तेन इत्यादि । मुख्यग्रहणेनामुख्यग्रहणसिद्धेः । ब्रह्मवेदयोर्ग्रहणेनार्थसाम्यादिति ॥ ७–८–९–१० ॥ स्विच्चास्य वेद समाख्यारूपत्वं च । तच्चेत्थं ॥ जन्माद्यस्येत्यादि । यतो वा इमानि भूतानि जायंते इत्यादिश्रुतिसमाख्यारूपं ॥ अर्थेष्वभिज्ञ इति । यः सर्वज्ञः सर्वविदिति श्रुतेः ॥ स्वराडिति । एष सर्वेश्वर एष भूताधिपतिरित्यादि श्रुतेः ॥ तेन इत्यादि । यो ब्रम्हाणं विदधाति पूर्वं यो वै वेदांश्च प्राहिणोति तस्मा इति श्रुतेः ॥ मुह्यंतीत्यादि । सहै वसंतं न विजानंति देवा इति श्रुतेः ॥ तेजोवारीत्यादि । देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहेति । अथैनमाहुः सत्यकर्मेति । विश्वं सत्यमित्यादि श्रुतीनां ॥ धाम्नेत्यादि । य

आत्माऽपहतपाप्मेत्यादि श्रुतेः । सर्वोत्कृष्टज्ञानानंदार्थकं सत्यमित्येतत् विज्ञानमानंदं ब्रह्मेति श्रुतेः ॥ परमिति । स परोवरीयानिति श्रुतेः ॥ धीमहीति । नारायणोऽसौ परमो विचिंत्यो मुमुक्षुभिः कर्मपाशादमुष्मादिति श्रुतेः । यद्वा । श्रीमद्व्यासो भारतं कृत्वा तेन चित्तप्रसत्तिमलभमानो भागवतं कृतवानिति प्रसिद्धं । तथा च भागवते श्रीमद्व्यासेन परीक्षितोऽथ राजर्षेर्जन्मकर्मविलापनं । संस्थां च पांडुपुत्राणां वक्ष्ये कृष्णकथोदयामिति प्रतिज्ञातत्वादुभयोः प्रमेयांतराभावेनाविशेषाभावेऽपि कृष्णकथोदयमित्यनेन सद्भावे सिद्धे ग्रंथाधिकृतकरत्वं कृष्णस्य सेत्स्यति । भारतेऽपि तदंगभूते हरिवंशे कृष्णकथावर्णनेनांततस्तदधिकृतत्वसिद्ध्या तद्दैवताकमंगलाभावेनात्रायुक्तमिति न शंक्यं । विशिष्टेष्टदेवताकस्यापि विधेयत्वेन स्वरूपत एकत्वेन नाममात्रतो भेदेऽपि नारायणनाम्न्यत्र संज्ञाभावेन णकारस्यान्यत्राभावतोऽसाधारण्येन वैशिष्ट्यात्तन्नामदेवताकं मंगलं भारते प्रयुयोज । नारायणं सुरगुरुंजगदेकनाथं भक्तप्रियं सकललोकनमस्कृतं च । त्रैगुण्यवर्जितमजं विभुमाद्यमीशं वंदे भवघ्नममरासुरसिद्धवंद्यामिति । अत्र नारायणनाम्न एवार्थरूपाणीमानि । तथाहि । नरः पुरुषरूपो विष्णुः तत्पुत्रो नारो ब्रह्मा तस्यायनमाश्रयो नारायणः अत एव सुरगुरुमित्युक्तं । सुरज्येष्ठत्वात्सुरातिमत्वाद्वा सुरो ब्रह्मा तत्पितरामित्यर्थः । भागवतेऽपि तस्यैवोपपादनं जन्माद्यस्य यतोऽन्वयादितरतश्चेति । यतो नारायणादाद्यस्य ब्रह्मणो जन्म । तदप्यन्वयात्साधारण्यात्प्रकृतिद्वारेत्यर्थः । इतरतोऽसाधारण्यान्नाभिपद्मादित्यर्थः । स्वपुत्राश्रय इति भावः । तथा । नरोत्पन्नत्वान्नारं जगत्तदाप्नोतीति नाराः । आप्तेरादिमत्वाद्वेति श्रुतेः । येति ज्ञानं समुद्दिष्टमित्युक्तेर्य ज्ञानं तद्युक्तो णो निर्वृत्तिश्च स यणः । स चासौ स चेति । णश्च निर्वृत्तिवाचक इत्युक्तेः । अत एव जगदेकनाथमित्युक्तं । स जगदेको नानाविधजगति व्याप्तोऽपि न स्वगतभेदयुक्त इत्यर्थः । नाथः । आ सर्वथा तिष्ठतीति अत्थं स्थावरं तन्न भवतीति नाथः । ज्ञानसुखीत्यर्थः । स च सचेति । तस्यैवोपपादनमर्थेष्वभिज्ञ इति । अर्थेषु सर्व पदार्थेषु स्थित्वाप्यभित् स्वगतभेदशून्य इत्यर्थः ज्ञो ज्ञानरूपश्च । स च स चेति । विष्णो । अकारो वासुदेवः स्यादित्युक्तेः । अ इति ब्रह्मेति श्रुतेश्च । न रमंति ते अरास्तथा न भवंति ते नाराः भगवद्भक्ताः तेभ्यः अयः शुभावहविधिः णः सुखं यस्मात्स नारायणः । अयः शुभावहो विधिरित्युक्तेः । अत एवोक्तं भक्तप्रियमिति । तस्यैवोपपादनं स्वराडिति । स्वान्भक्तान् रंजयति स तथेत्यर्थः । अत्रांतर्णीतणिच् । नाराय ब्रह्मणे अयति ज्ञापयति स्वात्मानमिति नारायणः अय गतौ । गत्यर्थानां च ज्ञानार्थत्वात् । अत एवोक्तं सकललोकनमस्कृतमिति । कं सुखं लं ऐश्वर्यं ताभ्यां सहितत्वात्सर्वकौशलयुक्तत्वाद्वा सकलो विष्णुस्तस्य लोकः प्रकाशो ज्ञानमिति यावत् । लुक् प्रकाश इति धातोः । तद्विषये नमस्कृतं वंदित । तस्योपपादनं तेने ब्रह्महृदाय आदिकवय इति । ब्रह्म

परिपूर्णं स्वात्मानमित्यर्थः। हृदा नमो निमित्तेन। तंत्रसारे हृदय शब्दस्य नमो वाचकत्वात्। अराः प्रपंचवृक्षस्य मूलभूतास्त्रिगुणाः संबंध्ययनं ज्ञानमरायनं। नं.स्त्यस्येति नारायणः। अत एव त्रैगुण्यवर्जितमित्युक्तं। असार्वत्रिकं यथार्थज्ञानं सात्त्विकं। संशयितज्ञानं राजसं। विपरीतज्ञानं तामसं। एवं गुणत्रयसंबंधिज्ञानं त्रैगुण्यं तेन वर्जितं। तस्यैवोपपादनं मुह्यंति यं सूरय इति। सूरयः त्रैगुण्यज्ञानवंतः यं याति प्राप्नोति स्वानंदमनेनेति। यं ज्ञानानंदरूपं नारायणं। ज्ञातुमिति शेषः। मुह्यंति विपरीतज्ञानिनो भवंतीत्यर्थः। सत्त्वादिगुणशून्य-त्वेऽपि ज्ञानानंदादिगुणराहित्येन जानंतीति भावः। न रतिः सुखमनेनेति अरं जन्म तदयाति प्राप्नोतीति अरायनः। स न भवतीति नारायणः। अत एवोक्तमजमिति। जन्मरहितमित्यर्थः। तस्यैवोपपादनं तेजोवारिमृदां विनिमयो यत्रेति। नारायणे तेजोवारिमृदां तेजोबन्नानामाविनिमयः कार्यरूपजडशरीराभावः। यथा प्रामाण्योपेत इत्यर्थः। न रमते निर्दुःखं सुखं प्राप्नोतित्यनेनेत्यरं लिंगशरीरं तदयनमाश्रयो यस्य सोऽरायनः सन भवतीति नारायणः। अत एवोक्तं विभुमिति। भवत्यस्मात्स्थूलदेह इति भूः लिंगशरीरं विगतं भू यस्मात्तं तस्योपपादनं। यत्रेत्यस्यावृत्त्या यत्र त्रिसर्गो मृषेति। यत्र नारायणे त्रिसर्गः त्रिगुणात्मकानां जीवानां सर्गः देहसंसर्गो यस्मात्स त्रिसर्गो लिंगदेहो मृषा अत्यंतासद्रूप इत्यर्थः। नरो महापुरुषः तदुत्पन्नात्वान्नारो ब्रम्हा तं अययति जन्म प्रापयति स नारायणः अत एवोक्तमाद्यमिति। आकारस्तु पितामह इत्येकाक्षरात्। आ शब्दवाच्यो ब्रह्मा तस्याप्याद्यः कारणमित्यर्थः। तस्यैवोपपादनं धाम्ना स्वेन सदेति। स्वे स्वकीया भक्ताः तेषामिनः स्वामी ब्रह्मा स्वेनः तं सादयति जन्म प्रापयतीति स्वेन सत् तेन। षद्लृविशरण गत्यवसादने ष्विति धातुः। गत्यर्थकेऽत्रांतर्णीतणिच्। धाम्ना स्वरूपेण युक्तमिति। इत्थंभूतलक्षणे तृतीया। तेजः स्वरूपं गेहं च प्राज्ञैर्धामेति गीयत इति शब्दनिर्णयोक्तेः। आ समंताद्रतिः सुखं यस्मात्स आरो धर्मः तद्विरुद्धत्वान्नाराः कामादायस्तान् अययति गमयतीति नारायणः। अत एवोक्तमीशमिति। इकारो मदनःप्रोक्त इत्युक्तेः इः कामः तदुपलक्षितक्रोधादयोऽपि। तेषु ईष्टे प्रवर्तनाप्रवर्तनयोः शक्नोतीति स तथा तं। तदुपपादनं निरस्तकुहकमिति। कुं कुत्सां हंति प्राप्नोतीति कुहं। हन हिंसा गत्योरिति धातोः। तथा विधं कं सुखं येभ्यस्ते कुहकाः कामादयः निरस्ताः विनाशिताः कुहका येन तमित्यर्थः। अरा दोषास्तदयनमाश्रयः संसारः स न भवत्यस्मादिति नारायणः। अत एवोक्तं भवघ्नमिति। संसारनाशकमित्यर्थः। यद्वा। भवं महाकल्याणरूपं मोक्षं हापयति गमयतीति। हनहिंसागत्योरिति धातोः। अत्रांतर्णीतणिच्। तदुपपादनं सत्यमिति। सत् पुनरावृत्त्यादिदोषशून्यं स्थानं यापयति प्रापयतीति स तथा तं। नयंति शिष्या-दिषूपदिशंति भगवद्रूपमिति नाः देवाः। आ ईषत् अरः शापादिदोषा येषामस्तीति आराः प्रल्हादादयोऽसुराः। देवाः शापाभिभूत-

त्वात्प्रल्हादाद्या विजज्ञिर इत्युक्तेः । आ अतिशयेन यांति सिद्धिमिति आयाः सिद्धाश्च तैः नूयते स्तूयते स तथा तं । णु स्तुतौ । औणादिकत्वादुलोपः निरुक्तत्वाद्वा । णत्वानपगमश्च । अत एवोक्तममरासुरसिद्धवंद्यमिति । वदि अभिवादन स्तुत्योरिति हि धातुः । तदुपपादनं परमिति । सर्वोत्तममित्यर्थः सर्वपालकं वा । पॄ पालन पूरण इति धातोः । सर्वपालकस्यैव स्तुत्यत्वादिति भावः । नारायणमिति कर्मणः क्रियासापेक्षत्वाद्वंद इत्युक्तं । स्तुव इत्यर्थः । वदि अभिवादनस्तुत्योरिति धातोः । नाभिवादनार्थः । ग्रंथकर्तुर्व्यासस्य वंद्ये नारायणेनाभेदात् । न हि स्वस्यैव स्वयं वंदतीति क्वापि दृष्टं । नमस्ते भार्गव श्रीमन् जामदग्न्य तपोधन । रामकृष्णौ स्मृतावावां कश्चित्ते श्रवणं गताविति भागवतोक्त्या दृष्टमिति चेन्न । तत्र वर्णधर्मप्रवर्तनस्यावश्यकत्वप्रदर्शनार्थत्वात् । न च नारायणं नमस्कृत्ये-त्यादौ दृष्टमिति वाच्यं । उदीरयेदित्यनेन विधिबोधनार्थकत्वात् । नापि तस्मै नमो व्रजजनैः संचक्रे ह्यात्मनात्मने । अहो पश्यत शैलोऽसौ रूपी नोऽनुग्रहं व्यधादित्यनेन स्वस्मै स्ववंदनं दृष्टमिति वाच्यं । सर्वावताराभिन्नोऽपि सर्वशक्तिरपि स्वयं । पूज्यपूजकनीचोच्चं मोहनाय दुरात्मनां । अखंडैकरसो विष्णुः दर्शयेत्तत्र तत्र हीति षाड्गुणोक्त्या तस्य दुरात्ममोहनार्थत्वात् । तद्वत्रापि तथास्त्विति चेन्न । मंगल एव तथात्वे कर्तव्यसर्वग्रंथस्य मोहार्थत्वप्रसक्त्याऽनुपादेयत्वापातात् । वंद इत्यस्यात्मनेपदत्वेऽपि नात्मार्थं स्तवनामिति सूचनाय तत्तात्पर्यमभिहितं धीमहीति । अत्र बहुवचनेनैवास्मशिष्यादिविवक्षया ध्वनितत्वात् । वदतेर्ध्यानार्थकत्वं कुत इति न शंकनीयं । स्ववाक्यस्य छंदस्तुल्यत्वेन सर्वोपपत्तेरिति द्योतनाय छांदसप्रयोगः । किंचात्र वक्ष्यते । दशमस्य विशुध्यर्थं नवानामिह लक्षणमिति । तदर्थः । इह अत्र सर्गो विसर्गश्चेत्याद्युक्तदशलक्षणवति भागवते दशमस्य दशमावतारस्य कल्किनो विशुध्यर्थं विशेषेण शोधनार्थं नवानां मत्स्यादिबुद्धांतानामवताराणां लक्षणं स्ववाक्ययाथार्थ्यनिश्चायकं लिंगं कथ्यत इति शेषः । अतीतवर्तमानयोः कथितलिंगानामनुभवे साधिते आगामिनोऽपि लिंगकथनवाक्ये विश्वासार्हतायाः प्रसिद्धेरतीतानां मत्स्यादिकृष्णांतानां वर्तमानस्य बुद्धस्य चोक्तलिंगानुभवेनानागतस्य कल्किनोऽप्युक्तलिंगविश्वासजननार्थमिति भावः । एवं भागवतस्य दशावतारप्रतिपादकत्वे सिद्धे मंगलेऽपि तत्प्रतिपादनस्यैवोचितत्वात् । तदभावेन विरोधे प्राप्ते तत्परिहाराय तदप्युपपद्यते । यतः मूलरूपादाद्यस्य दशावतारप्रथमस्य जन्म अवतारः । प्रादुर्भावो हरेर्जनिरित्युक्तेः । अभूदिति शेषः । यतोऽन्वेति सर्वत्रानुवर्तनीयं । यतः मत्स्यादनु अनंतरं कं जन्म कूर्मावतारं यः अयात् प्राप । यः इतरतः । इतरेण स्वविरोधिना हिरण्याक्षेण तः युद्धं यस्य स तथा वराहोऽभूत् । तकारः कीर्तितश्चोरे मोहे युद्धे च कीर्तित इत्येकाक्षरः । यः अर्थेष्वभिज्ञः । अर्थाः विषयाः त एवे-

षवः तैर्निभिद्यत इति अर्थेष्वभित् । कामानां हृद्यसंरोहं भवतस्तु वृणे वरमिति नृहरये वरयाचनात् प्रल्हाद इत्यर्थः । तं जानातीति स तथा । श्रीनृसिंह इत्यर्थः । यद्वा । अर्थेषुः विषयेप्सुः हिरण्यकशिपुः । दस्यून्पुरं षण्न विजित्य लुंपत इत्यादेः । तेन न भिद्यते न बध्यते स प्रल्हादः तं जानातीति । स्वराद् । स्वः स्वर्लोकं आरुषा अतिशयेनाटऽति व्याप्नोतीति । औणादिकोकारलोपः । यद्वा । स्वं आत्मज्येष्ठबंधुं शक्रं राजयति स्वर्गपालकत्वेन शोधयतीति स तथा । वामन इत्यर्थः । तेने ब्रह्म हृदाय आदिकवये । यः आदिः स्वकारणं कविर्ज्ञानी च जमदग्निः तदर्थं तन्निमित्तेनेति यावत् । हृदा स्नेहेन । अवश्यकत्वेनेत्यर्थः । ब्रह्म ब्राह्मणजातिमेव तेने विस्तृतवान् । ब्राह्मणविस्तारेणैव क्षत्रक्षयो लक्ष्यते । यद्वा । अब्रह्महृत् । आः इति पदच्छेदः । यः आः । आद्यर्थे बहुवचनं । अकरादयः स्वरा इत्यर्थः । स्वरा विंशतिरेकश्चेत्युक्त्या एकविंशतिवारामिति यावत् । अब्रह्महृत् । अब्रह्म ब्रह्मविरोधिक्षत्रं हरतीति तथा सन् । आदि-कवये जमदग्नये तेने सप्तमर्षित्वं ददावित्यर्थः । मुह्यंति सूरयः । सूरयो वसिष्ठादिज्ञानिनः । यं रामं प्रति मुह्यंति । लक्षणया यत्का-मितं न जानंतीत्यर्थः । यौवराज्यविषये तत्कथितस्य मुहूर्तस्य विघ्नात्क्रांतत्वादिति भावः । तेजोवारिमृदां विनिमयो यत्र त्रिसर्गो मृषा । तेजोवारिमृदां । अविनिमयः न विनिमयः मिश्रीभावः यस्मिंस्तादृशो देहः यत्र कृष्णे यथा यथार्थः । त्रिसर्गः । त्रिभिः तेजोवारिमृद्भिः सृज्यतेऽसौ त्रिसर्गो देहः यत्र मृषा मायकः । मायया मृतकं कृष्णस्तदा सृष्ट्वा प्रकाशयेत् । कुतो हि मृतकं तस्य मृत्युभावात्परात्मन इत्युक्तेः । धाम्ना स्वेन सदा निरस्तकुहकं । स्वेन निजेन धाम्ना स्वरूपेण । तेजो गृहं स्वरूपं च प्रभैर्धामेति गयित इत्युक्तेः । अवतीर्णमिति शेषः । सदा अनिरस्तं स्वीकृतं कुहकं कपटशास्त्रं येन तं । यद्वा । स्वेन धाम्ना स्वरूपभूतेन व्यासेन करणेन निरस्ताः कुत्सितं घ्नंति जानंति ते कुहकाः जैनाः येन तं । हन हिंसा गत्योरिति धातुः । गत्यर्थानां ज्ञानार्थता च । सत्यं । सत् सत्ययुगं प्रशस्त-कर्म वा । यापयति प्रवर्तयति स तथा तं । प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यत इत्युक्तेः । परं । कालिकपरत्वोपेतं । आगा-मिनमित्यर्थः तं परं लोकविलक्षणं सर्वोत्कृष्टं वा सर्वपालकं वा सर्वगुणपूर्णं वा परमात्मानं नारायणं धीमहीति । अनेन श्रीमद्रामायण-सप्तकांडार्थोऽपि वर्णितो भवति । स चेत्थं । अ इति ब्रह्मेति श्रुतेः । यतः यस्मात् । आत् परब्रह्मणः सकाशात् । यस्य रामस्य जन्म अवतारः । अन्वयात् मातापितृतो जनिरूपलोकसाधारण्यात् । इतरतः शुक्रशोणितसंबंधवैधुर्यरूपवैलक्षण्यात् । आसीदिति शेषेणान्वयः । पूर्णात्पूर्णमुदच्युत इत्युक्तेः । स रामोऽर्थेष्वभिज्ञ इति योजना च । अनेन बालकांडार्थ उक्तो भवति ॥ १ ॥ अर्थे-ष्वभिज्ञः । अर्थेषु प्रार्थनीयेषु पित्राज्ञापालनतद्वरप्रदानयथार्थीकरणबंधुवात्सल्यसुराराधितादिषु । अभिज्ञः सर्वज्ञः । अनेनायोध्या-

कांडार्थः ॥ २ ॥ स्वराडिति । स्वराट् । स्वान् भरद्वाजागस्त्यशबर्यादिस्वभक्तान् । रंजयति स्वदर्शनेन तोषयतीति स तथा। अनेनारण्यकांडार्थः ॥ ३ ॥ तेने ब्रह्म हृदाय आदिकवये । यो रामः । आदिकवये मुख्यज्ञानिने हनुमते । हृदा स्नेहेन । ब्रह्म-गुह्यसंदेशं मुद्रिकायां लिखितं रामेति वर्णद्वयात्मकं वेदरूपं शब्दराशिं वा । तेने व्यस्तारयत् । दत्तवानिति यावत् । अनेन किष्किंधाकांडार्थः ॥ ४ ॥ मुह्यंति यं सुरयः । यस्येत्यनुकृष्यते । यदीयमित्यर्थः । यं वायुबीजत्वाद्वायुरूपं हनुमतं । लोपः समाने इति सूत्रेण पुनः यं यांतं । । समुद्रमुल्लंघंतमिति यावत् । दृष्ट्वेति शेषः । सूरयोऽवरस्था इंद्रादयः । मुह्यंति कथमर्णवं तरेत्कथं सीतां पश्येद्रावणतो भयं कथं न स्याल्लंकासकाशात्पुना रामं कथं प्राप्नुयादिति संदेहं प्राप्नुवंति । अनेन सुंदरकांडार्थः ॥ ५ ॥ तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा । यत्र रामे । रामप्राप्तौ सत्यामिति यावत् । त्रिसर्गः त्रयः सर्गाः जन्मानि यस्य स त्रिसर्गो रावणः । प्राक्तौ पुनर्जन्मभिर्वा त्रिभिर्लोकाय कल्पतामित्युक्तेः । सप्तसु प्रथमेति सूत्रेण सर्वार्थो प्रथमा यस्मादिति स्मृत्या च प्रथमा षष्ठ्यर्थे । रावणस्येत्यर्थः । तेजोवारिमृदां । तेजसः स्वर्णरूपत्वेन लंकारूपदुर्गरूपं विनिमयः कार्यं । वारिणः समुद्रपरिखारूपं कार्यं । मृदः त्रिकूटाद्रिरूपं कार्यं यथा यथावत्कल्पितमपि । मृषा वृथा । आसीदिति शेषः । रावणजीवनरक्षको न बभूवेति भावः अनेन युद्धकांडार्थः ॥ ६ ॥ धाम्ना स्वेन सदा निरस्तकुहकं । स्वेन धाम्ना स्वरूपभूतसामर्थ्येन । कुं कुत्सितं शरीरं । घ्नंति प्राप्नुवंति । ते कुहकाः । स्वार्थे कः । हन हिंसा गत्योः । नृ तिर्यगादय इत्यर्थः । अनिरस्ताः अंगीकृताः । कुहका येन तत् । स्वाज्ञया-ऽऽगतानां मुक्तियोग्यानां कर्माण्यविगणय्य स्वसामर्थ्येन कीटादीनां मोक्षदात्रीति भावः । अनेनोत्तरकांडार्थः ॥७॥ यतः आत् इत्युक्तं । अतः । तत् सत्यं मूलरूपं पूर्णानंदज्ञानात्मकं । सच्छब्द उत्तमं ब्रूयादानंदंतीति वै वदेत् । येति ज्ञानं समुद्दिष्टं पूर्णानंद स्ततस्ततः इति दशमतात्पर्योक्तेः परं ततो मूलरूपात् अन्यत्वेन भासमानं रामाख्यमवताररूपं । धीमहि । धियः ज्ञानम्येत्युपलक्षणं । आनंदस्यापीत्यर्थः । महि महिमा यस्मिंस्तत् । पूर्णमदः पूर्णमिदमिति श्रुतेः । यद्वा । धियः ज्ञानादेर्महः उत्सवः अस्त्यस्मिन्निति ।अथवा । धियः भारत्याः इयः लक्ष्म्याश्च महि महिमा यस्मात्तदस्तीति सिद्धानुवादः । ग्रंथकर्तुर्व्यासस्य प्रतिपाद्यब्रह्मणैक्येन न मानाद्ययोगात् जयाशीर्वचनात्मकमंगलेष्वस्यान्यतमत्वाभावान्मंगलाभाव इति न वाच्यं । उत्कर्षवर्णनेनैव तत्सिद्धेः । जयेर्जयाभिभवयोराद्येऽर्थे सावकर्मकः उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मक इत्युक्त्योत्कर्षप्राप्त्यर्थकजयरूपत्वेनान्यतमत्वसिद्धेश्च । अस्य श्लोकस्य पुनरर्थांतरकल्पनं स्वबुद्धिमांद्यादवोपरमते ॥ ॥ १ ॥ नन्विदंजन्माद्यस्येत्यादिना कृतं पद्यं कथं युक्तं । तद्व्यारप्स्यमान ग्रंथविघ्नविघातार्थं । ग्रंथा-

रमणीयता तु प्रामाण्याधीना । प्रामाण्यं चापौरुषेयवाक्यस्याप्तवाक्यत्वेनानुबंधचतुष्टयत्वेन च संभवति । नान्यथा । तत्कथमत्रैत-
दुभयमित्याशंक्य मंगलाचैतच्छंकारूपाविघ्नविघातार्थकता संपादनार्थमाप्तवाक्यत्वानुबंधचतुष्टयवत्त्वयोः सद्भावं तदतिशयं च प्रतिपादय-
न्ग्रंथनाम्नोऽप्यन्वर्थकतां सूचयति ॥ धर्म इति ॥ ध्यानादिरूपमंगलवत् श्रीशब्दस्य प्रथमप्रयोगस्यापि वक्तृश्रोत्रादीनां श्रीकारकत्वेन
मंगलरूपत्वादादौ तत्प्रयोगे तच्छब्दवाच्यायाः रमाया एव प्राधान्यं ज्ञापितं स्यादतः सर्वधारकत्वविशिष्टभगवतो वाचकं धर्मशब्दमादौ
प्रयुज्यापि श्रीशब्दमपि प्रयोक्तुकामोऽन्वये तदधिकरणार्थकसप्तम्यंतभागवतशब्दस्यादौ प्रयुक्तत्वेऽपि । आदौ विशेषणं योज्यं विशेष्यं
तदनंतरमिति न्यायात्तद्विशेषणीभूते शब्दे तमेवादौ प्रयुयोज । अनेन धर्मशब्दस्य शद्धत आदौ प्रयोगेपि । अर्थतः श्रीशब्दस्यैवादौ
प्रयोगेणेव वक्तृश्रोत्रादीनां श्रीकारकत्वमस्य ग्रंथस्य सूचितं भवति । अत एव भागवते उवाचेत्यत्र सर्वत्र भगवच्छुकनारदानां श्रीशब्द-
प्रयोगो दृश्यते । त्रयाणामपि वक्तृश्रोत्रत्वात् । न च वाच्यं भगवत्यन्यवक्तृत्वाभावाच्छ्रोतृत्वाभाव इति । तदभिन्ने व्यासे तत्सिद्धेः ।
नापि ब्रह्मण्युभयसत्त्वेऽपि कुतः श्रीशब्दाभाव इति शंक्यं । स्थिते पितरि पुत्रेण राजशब्दवन्मर्यादार्थं सर्वप्राज्ञोत्तमत्वेन ब्रह्मणा तद-
स्वीकारात् । शुकनारदयोस्तु भगवता ब्रह्मणि प्रेमातिशयप्रदर्शनार्थं तत्पुत्रनिमित्तेन तच्छब्दस्य दत्तत्वात् । अत एव परीक्षिति श्रीशब्दा-
भावो वक्तृत्वाभावादिति बोध्यं ॥ श्रीमद्भागवते । श्रीः प्रामाण्यातिशयकारणरूपा संपद्यस्यास्तीति तथाविधे भागवते इत्यर्थः । भगवदा-
श्रितत्वेन श्रीशब्दवाच्या लक्ष्मीरपि प्रतिपाद्यत्वेन यस्यास्तीति तदिति वा । भागवतमिति पुराणनाम । तच्च भगवत्प्रणीतत्वाद्भगवत्प्रतिपाद-
कत्वाचान्वर्थकं । किंचेदं पुराणं निर्गुणविषयकं केचिदाचक्षते । तन्निरासार्थं भागवतमित्युक्तं । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियो ज्ञान–
विज्ञानयोश्चैवं षण्णां भगमितीर्यत इत्युक्तेः । पूर्णैश्वर्यादिषड्गुणवतो हरेः प्रतिपादकमित्यर्थः । निर्गुणमप्यत्रोच्यते । तत्कथमिति चेत् ।
तत्सत्त्वादित्रिगुणराहित्यान्नत्वैश्वर्यादिगुणाभावादित्यतोऽपि भगवदित्युक्तं । तस्याप्तवाक्यत्वेन प्रामाण्यप्रदर्शनाय तद्विशिनष्टि
॥ महामुनीति । ननु पूर्वदर्शितस्यादौ विशेषणं योज्यमित्यादिन्यायस्यात्रानुपपत्तिः । विशेषणस्य पूर्वमेव योजनायां श्रीशब्दप्राथम्यानु-
पपत्तेः उत्तरयोजनायां विशेषणप्राथम्यासिद्धेरिति चेन्मैवं । न्यायवाक्यस्य संहितविशेषणपरत्वात् । अन्यथा सत्प्रथमायां सत्सप्तम्यां भू
धात्वादिषु चासंहितविशषणस्योत्तरत्र योजनावश्यकत्वात् । संहितस्य च प्रायः पूर्वमेव दृष्टत्वात । भागवते श्रीमतीत्यादावुत्तरविशेषणा-
संगतिदर्शनाच्च ॥ महामुनिकृते । यद्यद्विचारपूर्वकं प्रणीतं तत्तदेव प्रमाणं । अन्यथा भट्टस्य कट्यां सरटः प्रविष्ट इत्यविचारवाक्यस्यापि
प्रामाण्यप्रसंगात् । अतो विचारापरपर्यायमननशीलत्वरूपप्रवृत्तिनिमित्तवन्मुनिशब्दप्रयोगः । तत्रापि नायं साधारणो मुनिशब्दः किंतु

महत्त्वेन विशिष्टः । महामुनित्वं तु व्यासस्यैवोचितं । मुनीनामप्यहं व्यास इति कथनात् । यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा । तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवमित्युक्तौ विभूतिमत्सत्त्वं यत् श्रीमत् श्रीपतित्वादिगुणसंपन्नं । तन्मम तेजः स्वरूपभूतं । यत् ऊर्जितं बलादिना स्वजातावधिकं तन्ममांशसंभवं । अंशस्तु द्विविधः प्रोक्तः स्वरूपो भिन्न एव च । मत्स्यादयः स्वरूपांशा भिन्नांशा द्रुहिणादय इति वचनाद्भिन्नांशरूपजीवस्य संभवो यस्मिंस्तदित्यर्थसंभवात् । भगवता व्यासस्याभेदेन श्रीपतित्वादिगुणसंपन्नत्वात्तस्यैव महामुनित्वेन परमाप्तत्वात्तत्कृतत्वेनास्य महाप्रामाण्यमिति भावः । नन्विदमयुक्तं । सर्वभागवतप्रणेतृत्वेन व्यासस्यैतत्पद्यप्रणेतृत्वेऽस्मच्छ-ब्दप्रयोगं विहाय पारोक्ष्येण महामुनिकृते इत्युक्तिरिति चेन्मैवं । विवक्षाभेदात् । तथाहि । स्वपाठकालेऽत्र श्रीमदिति पृथक्पदं । श्रीर्विद्यारूपिणी लक्ष्मीर्भार्यात्वेनास्यासावहं चेति श्र्यहं तस्मात् । श्रीमल्लक्ष्मीभर्तृत्वयोग्यमत्सकाशादित्यर्थः ॥ महामुनिकृते । अत्र कृते इत्यव्ययं तादर्थ्ये महामुनिर्नारदः तत्कृते तत्प्रार्थनसफलीकरणार्थमिति यावत् । यद्वा । महामुनिः शुकः तत्कृते तदध्यापनार्थं । अथवा । मह पूजायामिति धातोर्महच्छब्दस्य महेत्यादेशे महान्पूज्यो मुनिः शुको यस्यासौ स परीक्षिद्राजा तत्कृते तन्मुक्त्यर्थमिति यावत् । उद्भूयमाने इति शेषः । तथा विधे भागवते भगवत्प्रतिपादकत्वादेव तन्नामके पुराणे इत्यर्थविवक्षा । शुकादीनां पाठकालेतु पूर्वोक्तैव विवक्षेति नायुक्तेति भावः । एवमाप्तवाक्यत्वेनास्य प्रामाण्यमभिधायानेनैवानुबंधचतुष्टयस्य संक्षेपतः कथनेऽपि मंदबुद्धेर्बोद्धुमशक्यत्वात्त-द्विशदीकुर्वन्नधिकारिणस्तावदाह ॥ निर्मत्सराणां सतामिति । मत्सरः परोत्कर्षासहनं तद्रहितानां । सतां साधुगुणवतां । निष्पापवत्त्वं पुण्यवत्त्वं चेत्यधिकारिलक्षणं सामान्यतो ज्ञेयं । नन्वत्र किं ज्ञान्यधिकार्यज्ञानी वा । नाद्यः । तत्साधनभूतस्यास्यानुपयोगात् । नापरः । अस्मि-न्प्रवेशानुपपत्तेः । तस्मादुभयथाप्यधिकाराभाव इत्यत्राप्येतदेवोत्तरं निर्मत्सराणां सतामिति । मम सरं ज्ञानं मत्सरं । सृ गताविति धातो-र्गत्यर्थानां ज्ञानार्थत्वात् । निर्निश्चयनिषेधयोरित्युक्तेर्मद्विषयज्ञानरहितानामित्यर्थः । सतां शक्तानां । शक्तं सदिति संप्रोक्तमशक्तमसदि-त्युच्यते इत्युक्तेस्तात्पर्ये । विष्णुविषयकज्ञानरहिता ग्रंथप्रवेशसक्ताश्चात्राधिकारिण इत्युक्तं भवति । व्यासोक्तौ युज्यते चैतत् । व्यासविष्ण्वो-रभेदात् । अन्यत्र तु । निर्मत्सराणां । निर्मास्येतत्पुराणमिति निर्मन् । आर्षत्वाच्छांदसत्वाद्वा । तं निर्मातारं । सरंति । अनुसरंति ते निर्मत्सराः । स्वगुरूक्तानुसरणशीला इति यावत् । ज्ञानिनामपि स्वगुरुकृतग्रंथानुसरणशीलत्वान्नोपयोगाभाव इति भावः । अथवा । ब्रह्मान्यस्य सर्वस्य मिथ्यात्ववादिनां मतनिरासाय सतामित्युक्तं । अनेनोक्ताधिकारिणां न मिथ्यात्वमिति भावः । किंच चैतन्यैक्यवा-दिनामपि मतनिरासाय बहुवचनं ज्ञेयं । किंवा । अधिकारिणोऽभिमुखीकृत्य श्रीव्यासेनोच्यते । निर्मत्सराणां सतां वो युष्माकं । अत्र

तुशब्दादमुत्र च क्रमात्तापत्रयोन्मूलनं शिवदं च यथा स्यात्तथा विषयद्वयं निरूप्यत इत्यन्वयः । एवमधिकारिण उक्त्वाऽत्र विषयद्वयं दर्शयन् कार्यकारणयोर्मध्ये कारणस्यैव प्राधान्यात्कारणरूपं विषयं तावदाह ॥ धर्म इति । व्यासोक्तिपक्षे । श्रीमत् मत्सकाशात् । महामुनिकृते शुकनारदार्थं भागवते उद्धूयमाने सति मयेति च कर्ता । शुकाद्युक्तिपक्षे तु । श्रीमद्भागवते महामुनिकृते व्यासप्रणीते सति व्यासेनेति कर्ता । अत्र परमः प्रोज्झितकैतवो धर्मो वेद्यं वस्तु वास्तवं च निर्मत्सराणां सतां शिवदं तापत्रयोन्मूलनं च यथास्यात्तथा निरूप्यत इत्यन्वयः । नन्वत्र निरूप्यत इति क्रियापदमध्याहृतं । अध्याहारस्य निरंकुशत्वात् । न निरूप्यत इति किं न स्यादिति न शंक्यं । यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितं। वाक्यं चेति सतां नीतिः सावकाशेन तद्धवेदित्युक्तेः । अत्र प्रारिप्सितत्वेन प्रकृते इत्यर्थः । ननु भागवत इत्यनेनैवाधिकरणे बोधिते पुनरत्रेति कथनं व्यर्थमिति चेन्न । देवीभागवतस्य व्यावृत्तये प्रारभ्यमानत्वेन प्रकृतार्थवाचकपदस्यापेक्षणीयत्वात् । तत्र हि तदनुयायिभिस्तत्प्रणेतृत्वांगीकारेण तत्कृतत्वस्य भागवतशब्दवाच्यत्वस्य च सिद्धावपि आरप्स्यमानत्वेन प्रकृतत्वाभावात् । एवं भारताद्विष्वपि बोद्धव्यं । तत्रापि हि भगवत्प्रतिपादकत्वेन यौगिकभागवतशब्दवाच्यत्वस्य महामुनिकृतत्वस्य च सिद्धया तद्व्यावर्तकस्य प्रकृतत्वार्थकपदस्यापेक्षणीयत्वात् ॥ धर्मः ॥ वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तम इति विष्णुसहस्रनामसु पाठाद्रूढ्या धारणाद्धर्म इत्यपीत्युपनिषद्भाष्योक्तयोगेन च धर्मो भगवान् । ननु वेदे रामायणे चैव पुराणे भारते तथा । आदावंते च मध्ये च विष्णुः सर्वत्र गीयत इत्युक्त्या सर्वकालेषु सर्वपुराणगणे आदिभागादौ विष्णोरेव प्रतिपादनादस्यैव कोविशेष इत्यतः परम इत्युक्तं । अन्यत्र सामान्यतः प्रतिपादनेऽपि अत्र सर्वोत्कृष्टत्वरूपविशेषविशिष्टत्वप्रातिपादनादस्ति विशेष इति भावः । परत्वमप्यन्यत्रोक्तमिति चेत्तदपि मिथ्यात्वनिरासं विना पारमार्थिकं न संभवतीति मन्वानो विशेषणांतरमाह ॥ प्रोज्झितकैतव इति । निरस्तमिथ्यात्व इत्यर्थः । स विशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायेन भगवतो निरस्तमिथ्यात्वं सर्वोत्कृष्टत्वं निरूप्यत इति भावः । अन्यत्र परमत्वोक्तावपि तन्मिथ्यात्वनिरासाभावेनाप्रतिपादितप्रायत्वादत्र तु सद्भावाद्विशेषः । अयमत्र विषयविशेषः । यद्वा । पुरुषार्थो हि द्वेधा । इष्टप्राप्तिरनिष्टपरिहारश्च । एतदुभयप्रदोऽत्रत्यो विषय इति दर्शयितुं विशेषणद्वयं । तत्पक्षे अत्र परम इत्येकं पदं । अत्रपा गायन्विलज्यो विचरेदसंग इति स्वभजने निर्लज्जास्तान् अनाथनाथान्वा रमयाति सुखयति स तथा । प्रोज्झिताः निरस्ताः कैतवाः दुष्टकृतोपद्रवाः येन स तथा । अथवा । प्रोज्झितकाः निरस्तसुखा एतवः अकरवाच्यभगवद्विषये इतं गतं नष्टमिति यावत् । वं ज्ञानं येषां ते असुराः यस्मात्स इति । अत्र भगवत इष्टप्रापकत्वानिष्टपरिहारकत्वविषयो

ज्ञेयः । यद्वा । मायावादिनः स्वतो निर्धर्मकं ब्रह्म तत्र प्रतीयमानधर्माणां मिथ्यात्वं वदंति । तन्निरासायाह ॥ धर्म इति । अत्र परमः अत्र पा निलया रमा यस्मिन्स तथा । सप्तसु प्रथमेति सूत्रात्प्रथमा षष्ठयर्थे । लक्ष्मीपतेरित्यर्थः । धर्मः लक्ष्मीपतित्वादि धर्मजातं । प्रोज्झितकैतवः निरस्तमिथ्यात्वो निरूप्यत इति । भगवद्धर्माणां मिथ्यात्वनिरासरूपो विषय उक्तः । अथवा । महाभारते । भगवान्भगवद्धर्मश्च प्रतिपादित एव पुनरत्र वर्णने को विशेष इत्यतोऽपि एतदेव ॥ धर्म इति । अत्र परम इत्यत्र भिन्ने पदे पराअपौरुषेयत्वेनोत्कृष्टा वेदरूपप्रमाणं यस्येत्युभयविशेषणं । रमंति सुखं प्राप्नुवंत्यनेनेति धर्मविशेषणं। धर्मः वेदाविधित्वेनोक्तः। प्रोज्झितकैतवः। अकयप्रविसंभूमसुखहा विष्णुवाचका इत्याभिधानात् । प्रो विष्णुस्तेन उज्झितकैतवादधर्माज्जातं दुःखं यस्मिन्स तथा । निर्दुःखरूपमोक्षः । एतद्द्वयमेव निरूप्यत इत्यर्थः । भारते चतुर्विधानामपि पुरुषार्थानां संपाद्यत्वेनोक्तत्वादत्र तु अर्थकामयोः परमार्थ विरोधित्वात्तौ विहाय केवलं धर्ममोक्षयोरेव प्रतिपादनादयमेव विशेष इति भावः । अनेनात्र धर्ममोक्षरूपो द्विविध एव पुरुषार्थो विषयः सूचितः । उत वा । पृथक्पदत्वे । अत्र भागवते अत्र भगवति स्थिते इति वा । परमः परा । पॄ पालनपूरणयोरिति धातोः । गोपी कुब्जादिषु पूर्णा व्याप्ता लक्ष्मीर्यस्य स तथा । एकपदत्वे तु । अत्रपः गोप्यादिगणः त्रपया च हापिता इति वक्ष्यमाणत्वात् तं रसयतीति तथा । प्रोज्झिताः कैतवाः दुष्टाः पूतनादयो येन स तथा तादृशो धर्मोऽसाधारणः कर्मविशेषो निरूप्यते। भारतेऽष्टादशपर्वस्वपि एतत्प्रतिपादनाभावादस्य विशेषः। अनेन गोप्यादिरतिरूपः पूतनादिदुष्टघातकत्वरूपो विषयः सूचितः । किंवा । अत्र भागवते परमः केवलः धर्मः धर्मशब्देन तदवतारभूतः पूर्वमेव प्रतिपादित्वात्पिष्टपेषणवादिदं स्यादित्यत उक्तं ॥ प्रोज्झितकैतव इति । कितवो दुर्योधनः तदीयचरितं कैतवं प्रोज्झितं त्यक्तं कैतवं दुर्योधनचरितं यस्मिन्युधिष्ठिरकथानके तत्तथा विधं । अत्र दुर्योधनकथानकत्यागाद्विशेष इति भावः । अनेन दुर्योधनचारितराहित युधिष्ठिरकथानकरूपो विषयः सूचितः । अत्र केचित् । केवलधर्मशब्देन वेदहितत्वात्सात्विको विषयः । अत्र परम इत्यनेन सुफलदर्शनाद्राजसः । प्रोज्झितकैतव इत्यनेनान्योत्सारणाद्दारुणत्वेन तामस इति वदंति । तन्न । सतां सत्फलदातृत्वेन दुष्टानां प्रोत्सारकत्वेन सात्विकस्यैव सिद्धेः। अथादौ कारणरूपविषयकथनात्तदपेक्षया कार्यरूपं विषयमाह ॥ वेद्यमिति । अत्र यत्पदमध्याहारेण योजना द्रष्टव्या । अत्र भागवते यद्वस्तु शिवदं मोक्षदं तापत्रयोन्मूलनं आध्यात्मिकाधिभौतिकाधिदैविकत्रितापनाशनं धर्मादिनाम्ना विषयत्वेनोक्तं । तस्य वेद्यं कार्यं । विद ज्ञानाविति धातोः । जगदित्यर्थः । वास्तवं यथार्थं । निरूप्यते । न तस्य मिथ्यात्वं । सत्यस्यैव सुखदुःखदानहरणयोग्यत्वादिति भावः । अनेन यस्मै सुखदं यस्य तापत्रयोन्मूलनं वस्तूक्तं तज्जगद्वास्तवमित्यपि योजना

द्रष्टव्या । नन्वेतज्जीवमुद्दिश्योच्यते । अथवा जडं । नाद्यः । नित्यत्वेन कार्यत्वानुपपत्तेः । न द्वितीयः । सुखाद्यनुभवाभावेन तद्दाना- द्यनुपपत्तेरिति । चेन्मैवं । जडदेहसंबंधिनो जीवस्यैव कार्यत्वस्य सुखाद्यनुभवस्य युक्तत्वेन विवक्षितत्वात् । यद्वा । मायावादिना विश्वं मिथ्या दृश्यत्वादित्यनुमानसाधितविश्वमिथ्यात्वनिरासायाह ॥ वेद्यमिति । दृश्यत्वस्य चक्षुर्मात्रग्राह्यत्वार्थकत्वे भूपरमाणुव्योमादीनां तदभावेन सत्यत्वप्रसंगात्पंचेंद्रियविषयत्वांगीरे मनो ग्राह्यस्य सुखदुःखादेः सत्यत्वापत्तेश्च । ज्ञेयत्वरूपार्थकत्वमेव पराभिमतमिति मत्वा वेद्यमित्युक्तं । वेद्यं ज्ञेयं । वस्तु अनन्यात्मरूपं वियदादि वास्तवं सत्यमित्यत्र निरूप्यते। शुक्तिरजतादि व्यावृत्तये वास्त्विति ग्रहणं । वेद्यमिति तु पराभिमतानुमानस्य व्यभिचारादिप्रदर्शनार्थं । दृश्यते त्वग्र्यया बुध्येति श्रुत्या मिथ्यात्वाभाववति ब्रह्मणि दृशत्वहेतोः सत्त्वादित्यादेरित्यर्थः । द्यस्य सत्यत्वानिरूपणे किं फलमित्यत आह ॥ शिवदमिति । इहमिति शेषः । इदं निरूपणं शिवदं । शिवं भद्रं शिवा गौरीति कोशात्सर्वकल्याणरूपमोक्षदायकं । अनेनेष्टप्रापकपुरुषार्थहेतुत्वं सूचितं ॥ तापत्रयोन्मूलनं । तापानां त्रयं यस्मिंस्तस्य उन्मूलनं नाशकं । अनेनानिष्टनाशकत्वरूपपुरुषार्थहेतुत्वं सूचितं । एतद्वयकथनेन प्रयोजनमुक्त भवति । पूर्वत्र जगत्सत्यत्वं विषयः । अत्र दृश्यत्वस्य हेतोराभासत्वसाधनं विषय इति विशेषः । वस्तुशिवदमित्येकं पदं वा । वसत्यास्मिन्भगवानिति वस्तुयोग्यजीवजातं । यद्यपि भगवान्सर्वत्र व्याप्त्या वर्तते तथापि वासापरपर्यायसंनिधानविशेषेणात्रयोग्यत्वं सूचितं । तादृशजीवजाताय सुखदमित्यर्थः ॥ ताप- त्रयोन्मूलनं । तकारः कीर्तितश्चोरे मोहे युद्धे च कीर्तित इत्येकाक्षरकोशात् । तं मोहं आप्नुवंति ते तापाः अयोग्यजीवा असुरा- दयः तेषां त्रयं सात्विकराजसतामसभेदेन सुखत्रयं उन्मूलयति उच्चैरधिकं संवृणोति । अनाविर्भवतीति यावत् । मूल संवरण इति धातोः । अनेन योग्यायोग्यजीवानां मोक्षांधतमोरूपं प्रयोजनमुक्तं ज्ञेयं । वः तु इति भिन्नपदपक्षे तु पूर्वमेव योजना दर्शिता । अथवा । वस्तुशिवदंतापत्रयोन्मूलनमित्येकं पदं । अंतर्णीतण्यर्थात् । वा गति गंधनयोरिति धातोर्गत्यर्थानां च ज्ञानार्थकत्वात् । जाग्रद- वस्थानियामकत्वेन ज्ञापकत्वात् व शब्दो विश्ववाची । तं स्तौति स वस्तुर्गणपतिः । विनायकोऽथ विश्वस्य ध्यानादैद्रुजवक्रतामित्युक्तेः। शिवो रुद्रः । दं कलत्रे च दातुरीत्युक्तेः । शिवपदसांनिध्याच्च दं रुद्रकलत्रं देवीत्यर्थः । तापोऽस्यास्तीति तापः । अर्श आद्यच् । तापयति भुवनमिति वा तापः सूर्यः । एते चत्वारस्त्रातार इति यत् । यं ज्ञानं । येति ज्ञानं समुद्दिष्टमिति भागवततात्पर्योक्तेः । तस्य उन्मूलनं निरासः । अयं तृतीयो विषयोऽत्र प्रतिपाद्यत इत्यर्थः । एवं चतूर्णां त्रातॄणां निरासे पंचमस्य विष्णोरेव त्राणकर्तृत्वं सिध्यतीति भावः । अनेन पंचायतननिरासरूपो विषयः । नन्वेतेषां त्राणकर्तृत्वं किं नांगीकर्तव्यमित्यत आह॥ किंवेति । अपरैः अश्रेष्ठैः

रुद्रादिभिः किं फलं न किमपि। श्रेष्ठत्वाभावादेवेत्यर्थः। एवमेवान्याप्तविषयप्रयोजनाधिकारिष्वपि निष्फलत्वरूपो विशेषो द्रष्टव्यः। एतद्वा शब्देन सूचितं। विष्ण्वंगीकारे किं फलमित्यत आह ॥ ईश्वरः सद्य इति। ईश्वरेभ्यो ब्रह्मशर्वादिदेवेभ्योऽपि वरो यतः। अतस्त ईश्वराख्येति मुनयः संप्रचक्षत इत्युक्तेः। ईश्वरः सर्वश्रेष्ठो विष्णुः। सद्यः। सत् मोक्षाख्यं निर्दोषं स्थानं यापयति प्रापयतीति स तथा। या प्रापण इति धातोरंतर्णीतणिच्। मोक्षदो हरिरेवैक इत्युक्तेः। सर्वश्रेष्ठत्वाद्विष्णोस्तत्तत्त्वज्ञाने मोक्षप्राप्तिः फलमिति भावः। तादृशविष्णुज्ञाने क उपाय इत्यत आह ॥ हृद्यवरुध्यत इति। चेदिति शेषः। स हृदि मनसि अवरुध्यते अनवरतं स्थाप्यते चेत्तज्ज्ञानं सुशकं। ध्यानजज्ञानयोगाद्गम्यमित्युक्तेरिति भावः ॥ अस्त्वेतत्सर्वं तथाप्यनेनास्य पुराणस्य किमायातमित्यत आह ॥ अत्रेति। अत्र भागवते। कृतिभिः श्रवणार्थावधारणवचनव्याख्यापनाध्ययनाध्यापनाभ्यासरूपप्रयत्नैः शुश्रुषुभिः सेवनोत्सुकैः। तद्धरेर्हृद्यवरोधनं क्षणात्कालविलंबमंतरेण। साध्यत इति शेषः। यद्वा। ईश्वरः परैर्वा ब्रह्मादिभिरिव। उपमायां विकल्पे वेत्यमरः। सद्यः सपदि। अवरुध्यते किं नेत्यर्थः। आक्षेपार्थकस्य किं शब्दस्य विपर्यये पर्यवसानात्। किंतु अत्र इश्वरे हृदि स्नेहेन विषये। हृत्स्नेहे स्वांतवक्षसोरिति शब्दनिर्णये। तत्क्षणात् तस्मिन्नीश्वरे उद्धर्षो यस्मात् कंपोथ क्षणउद्धर्ष इत्यमरः। विष्णुभक्तगुरोः सकाशादित्यर्थः। शुश्रूषुभिः श्रवणेच्छुभिः। एतद्भागवमिति शेषेण सबंधः। तादृशैः कृतिभिः कुशलैः पुरुषैः। यद्वा। अत्रकृतिभिरित्येकं पदं। नास्ति त्रोऽन्यस्त्राता यस्येत्यत्रो विष्णुस्तदर्थमेव कृतं कर्मजातं तद्येषामस्तीति तैरवरुध्यते। अनेन तारतम्यं सूचितं स्यात्। अथवा। अत्र विषयत्वेन प्रतिपादितभगवत्कार्यभूतस्य जगतः सत्यत्वे तस्य तेनाभेदः स्यादित्यत आह ॥ किंवेति। तर्ह्येतद्विषयभूतं जगत्कारणं सत् सत्यरूपं जगत्किं। न। किंत्वीश्वरो जगत्स्वामीत्यर्थः कोऽसावित्यत आह ॥ य इति। य ईश्वरः। अत्र भागवते। अह्लादिभगवत्स्नेहाविषये वा। माहात्म्य ज्ञानपूर्वकस्तु स्नेहो भक्तिरितीर्यत इत्युक्तेः। भक्तिविषये इत्यर्थः। कृतिभिः भागवतविषयेऽभ्यासादिव्यापारैः। भगवत्स्नेहविषये तु पूजादिकर्मभिः करणैः। परैः तत्परैः। शुश्रूषुभिः सेवनेच्छुभिः पुरुषैः कृतिभिः। क्षणादल्पकालेन। अवरुध्यते स्थिरीक्रियते। स ईश्वर इत्यर्थः। उत वा। पूर्वं रुद्रादीनां जगत्त्रातृत्वेन ज्ञेयत्वनिषेधः कृतः। स कथमित्यत आह ॥ किंवेति। ईश्वरो रुद्रस्तदुपलक्षितदुर्गादिश्च। सत्। सदेव सोम्येदमग्र आसीदिति श्रुतेः। जगत्कारणं किं। न। अत्र रुद्रादिविषये। कृतिभिः। यं कामये तं तमुग्रं कृण्णोमीति श्रुतेः। जन्मादिकारणैः। एः अस्य। अकारो वासुदेवः स्यादित्येकाक्षरात्। भगवतः। ईः लक्ष्मीः। लक्ष्मीरीकार उच्यत इति च। अस्येति षष्ठ्या तदधीनत्वं बोधितं। प्रायः सर्वत्र दृष्टत्वात्। न च वाच्यं गोस्वामीत्यत्र दर्शनाभाव इति। नियम्यं विना स्वामित्वानुपपत्त्या तदधीनत्वासिद्धेः। प्रायः शब्ददानाच्च। परा श्रेष्ठा। परै-

रित्यत्रायं पदश्लेषो बोध्यः।परा । एः । इति । का भगवदधीना लक्ष्मीस्तत्राह ॥ य इति । ययेत्यध्याहार्यं । यया लक्ष्म्या यः ज्ञानरूपः भगवान् । सत्यं ज्ञानमनंतं ब्रह्मेति श्रुतेः । येति ज्ञानं समुद्दिष्टमिति स्मृतेश्च । हृदि स्ववक्षसि । अवरुध्यते बाहुपाशेनावष्टभ्यते सेत्यर्थः । तत्प्रमेयमत्र भागवते शुश्रूषुभिः श्रवणोत्सुकैः क्षणाल्पकालेन ज्ञायत इति शेषः । किंवा । वेत्यथवा । अपरैः नास्ति परः परमात्मा येषां तैः स्वस्य परब्रह्मभावनयाऽन्यपरब्रह्मानंगीकारात् । मायावादिभिरित्यर्थः । नास्तिकैर्वा । तान्विशिनष्टि ॥ अत्र कृतिभिरिति । अत्र भगवद्विषये । कृतं अलंभावो येषामस्तीति कृतिनस्तैः । महामुनिकृते महाविचारशीलपुरुषार्थ–मुक्तो भगवान् । अवरुध्यते अवधार्यते किं । न । अपि त्वीश्वरः सर्वोत्कृष्टः एकवचनेन एक एव। सद्यः सत् इष्टं यापयति प्रापयति स तथा । अथवा । सदभिव्यक्तरूपत्वात्कार्यमित्युच्यते बुधैरिति वचनात् । कार्यं देहादि तद्यापयति गमयती स तथा । अनिष्टनिवारक इत्यर्थः । इत्थं । हृदि हरत्यज्ञानमिति हृत् ज्ञानं तस्मिन् । विषयसप्तमीयमतस्तृतीयार्थे । द्वितीयार्थे तृतीयार्थे पंचम्यर्थे च सप्तमी । चतुर्थ्यर्थे च विज्ञेया विषयेति यां विदुरिति महाव्याकरणोक्तेः । तेन ज्ञानेनेत्यर्थः । अयं सर्वेष्टदाता मे सर्वानिष्टनिवारकः । सर्वोत्कृष्टो यमैवेकस्तदीयोऽहं स मे पतिः । इति ज्ञानं निश्चितं यत्सादीक्षाभ्यतंरामतेति परमश्रुतेः । शुश्रूषुभिः सेवनेप्सुभिः । अवरुध्यते तत् श्रीमद्भागवते क्षणात्ज्ञायत इति शेषः । अत्रात्रेति त्रिरुपादानं ग्रंथकर्तुविषयस्य प्रयोजनस्य चैक्यज्ञापनार्थं । एवमाप्तवाक्यत्वविषयप्रयोजनाधिकारिणां महत्वेन सद्भावान्महाप्रामाण्येनारंभणीयतासिध्या पूर्वपद्येन कृतस्य मंगलस्य युक्तैव सेत्स्यतीति भावः । अत्र संबंधस्तु ग्रंथविषययोः । प्रतिपाद्यप्रतिपादकत्वस्वरूपसंबंधः । ग्रंथाधिकारिणोः श्राव्यश्रोतृत्वरूपः । ग्रंथप्रयोजनयोः प्राप्यप्रापकत्वरूपः । अधिकारिविषययोर्ज्ञातृज्ञेयत्वरूपः अधिकारिप्रयोजनयोरपेक्ष्यपेक्षकत्वरूपः । विषयप्रयोजनयोः साध्यसाधनत्वरूपसंबंधः । तस्य संबंधांतरं नान्वेषणीयं । स्वनिर्वाहकत्वात् । अन्यथाऽनवस्थापत्तेरिति । इत्यलं पल्लवितेन ॥ २ ॥ एवमाद्यपद्येन मंगलं द्वितीयपद्येन ग्रंथप्रामाण्यं चाभिधाय स्वस्य मूलरूपाद्ब्रह्मण एवोपदेशाधिकारात्तद्रूपेण तस्मा एतदुपदिश्यावताररूपेनायं नियम इति द्योतनाय बालानां लीप्याचार्यवद्ब्रह्मशिक्षितान्नारदात्परिक्षार्थं स्वोक्तभागवतमवताररूपेण श्रुत्वा रुद्ररूपशुकाध्यापनाद्गंगावत्त्रिदैवतसंसर्गेणास्य महाफलत्वं वर्णयन् । मज्जंति मुनयः सर्वेत्वमेकः किं न मज्जसीति गंगया पृष्टे । अंब त्वद्दर्शनान्मुक्तिर्न जाने स्नानजं फलमिति श्रीनारदनोत्तरस्य दत्तत्वात्तत्र तत्स्नानाभावसिध्याऽत्र तु परमभागवतोत्तमश्रीनारदावगाहनासिध्या ततोऽप्याधिक्यं च दर्शयन् तच्छ्रवणमननोपदेशेन व्याख्यानादिषु प्रवृत्त्यर्थमधिकारिणः सत्कारपूर्वं नियोजयति ॥ निगमेति ॥ अहो भावुकाः । हे कुशलाः । पुरुषाः ॥ भागवतं । ऐश्वर्यादिषड्गुणयु-

तान्मूलरूपान्नारायणाज्जातं । यद्वा । भासकाः गावः किरणाः वाण्यो वा यस्य स भगुर्विष्णुस्तस्य स्वरूपं भागवतं तन्यते विस्तरेण प्रतिपाद्यते यस्मिंस्तत् । अथवा भगोर्विष्णोरयमवतारो भागवो व्यासस्तेन तन्यते विस्तरतो विरच्यते तद्भागवतं । तनु विस्तारे ॥ निगमकल्पतरोः । निम्यत् अध इति यावत् । निम्यग्भावनिकामयोरिति यादवः । गमः ऐंद्रियकं ज्ञानं यस्मात्सनिगमोऽधोक्षजत्वाद्विष्णुः । गम्लृगताविति धातोर्गत्यर्थानां ज्ञानार्थत्वात् । तस्मादीषन्न्यूनः निगमकल्पः स एव तरुः स्वयं संसारतरणादन्येषां अधिकारिणां तारणाच्च तरुशब्दवाच्यः । द्विर्तायेंतर्णीतणिच् । तादृशश्चतुर्मुखस्तस्मात् । यद्वा । निगमो वेदस्तस्मादीषन्न्यूनं निगमकल्पं भारतं ब्रह्मसूत्रं वा तेन संसारतरणशीलः । ताच्छील्यार्थादुनस्तथेत्युक्तेः । तस्मात्सकाशात् ॥ गलितं । कंठमाधुर्यमस्यास्तीति गली गायनशीलत्वान्नारदमुनिः । तेन तन्यते व्यासाथ विस्तार्यते । ब्रह्मोपदिष्टापेक्षया संवर्ध्यत इति यावत् । ननु गुरुतो यावच्छ्रुतैस्यवानुवादः शिष्येभ्यो युक्तस्तत्कथं संवर्धनं । अत्रोच्यते । त्वमेतद्विपुलीकुर्विति गुर्वाज्ञापालनस्यैव न्याय्यत्वाद्युक्तमेव संवर्धनं । तथापि संवर्धित ग्रंथस्य भागवतत्वं न स्यादिति चेन्न । भगवच्चरणनिःसृता गंगा संगतानामपां गंगात्ववदुपपत्तेः । पूर्वोदकस्य संगतोदकेनैकीभावः प्रसज्येतेति चेन्न । तथा व्यवहारमात्रोपयोगित्वेऽपि वृद्धिदर्शनेनांततो भेदस्यैव सिद्धत्वात् । तर्हि संवर्धितग्रंथस्यांततो भेदेन भागवतत्वाभाव एवेति चेत् । भागवतशब्दप्रवृत्तिनिमित्तं तु द्वेधा भगवत्प्रणीतत्वं भगवत्प्रतिपादकत्वं चेति । श्रीमद्व्यासकृतस्याप्यष्टादशसहस्रसंख्योपेतग्रंथात्मकस्य सर्वस्योभयप्रवृत्तिनिमित्तसद्भावान्न तदभावः । अस्तु श्रीमद्व्यासकृतस्य तथात्वं भगवत्प्रणीतत्वात् । तथापि ब्रह्मनारदाभ्यां संवर्धितग्रंथस्य तु व्यासप्रणीतत्वाभावान्नोभयप्रवृत्तिनिमित्तसद्भाव इति चेन्न । संवर्धितग्रंथस्यापि व्यासेनैवानूद्यग्रथितत्वात् । ब्रह्मनारदोक्तवर्णानुपूर्व्यभावेऽपि पौरुषेयग्रंथेऽर्थानुवादस्यैव विवक्षितत्वाच्च । तस्मान्न कश्चित्क्षुद्रशंकावकाशः । अनेन यथा नारायणेन ब्रह्मणे ब्रह्मणा च नारदायोपदिष्टं न तथा श्रीनारदेन व्यासायोपदिष्टमिति सूचितं । कंठमाधुर्यादेव हि नारदाच्छ्रुतं न गुरुत्वबुध्या । अन्यथांऽगीकारे गंधर्वादीनामिंद्राद्युपदेशकत्वप्रसंगात् । गुरुत्वे तु न कंठस्वरमाधुर्यमुपयुक्तं । किं तु ज्ञानविशेष एव । न हि तत्त्वबुभुत्सवो गुरुकंठमाधुर्यमपेक्षते । श्रीनारायणाभिन्नरूपस्य व्यासशिष्यस्य शिष्यो नारदस्तद्गुरुः कथं स्यात् । अवांतरभेदेन घटतेति चेन्न । व्यासावतारेऽपि व्यासशिष्यो यतीश्वर इत्युक्त्या धन्योपाख्यानांत तात्पर्यनिर्णये विंशेऽध्याये नारदस्य तच्छिष्यत्वोक्त्या च व्यासशिष्यशिष्यत्वसिद्धेः । अत एवान्यथाप्रयोगसौष्टवेऽपि गलितमिति प्रयुक्तं ॥ रसमालयं । रसानां भक्तिज्ञानवैराग्यदयावीरशृंगारादिरसानां कवितालंकाराणां माला पंक्तिर्यस्मात्स रसमालो विष्णुः । तस्माद्याति निर्गच्छति तत् । यद्वा । रसानामुक्तविधानां मा ज्ञानं तत् । आ साकल्येन लाति स्वीकरोतीति रस-

मालो व्यासः समानमुत्तरं । अथवा । रसः सारो वरः श्रेष्ठ इत्यभिधानात् । रसः सर्वजीवश्रेष्ठो ब्रह्मा मा लक्ष्मीश्च ते सुतदारत्वेन लातीति रसमालो विष्णुस्तस्य यं ज्ञानं येनेति तत् । येति ज्ञानं समुद्दिष्टमित्युक्तेः । किंवा । रस शब्द इति धातोः रसः शब्दरूपो वेदः तस्य मा ज्ञानं । तदनुकूलं ज्ञानमिति यावत् । तस्यालयं स्थानमिति । उत वा । रसा मधुरादिषड्रसाः तैः समाना मामिर्मानं येषां ते रसमाः कामादि षट्शत्रवः तेषां आसमंताल्लयो नाशो येनेति । रस्य रतिरूपस्य विष्णोः सं संनिधानं तस्य आलयं स्थानमिति वा । ॥ शुकमुखादमृतद्रवसंयुतं । अत्र पदच्छेदः । शुकं उखादमृतद्रवसंयुतमिति । षट्सु द्वितीयेति सूत्रात् द्वितीया पंचम्यर्थे । उकारः शंकरः प्रोक्त इत्यभिधानात् । उना शंकरेण खाद्यते भक्ष्यते तत् उखादं विषं तदस्यास्तीति उखादः तक्षकः सर्पः । अत्रार्श आद्यच् । तस्मान्मृतं मरणं यस्य स उखादमृतः परीक्षिद्राजा सः द्रवो ज्ञानं । द्रुगताविव्यस्माद्धातोर्गत्यर्थानां ज्ञानार्थत्वात् । तेन संयुतो येनेति तत्तथा । यद्वा । शु शीघ्रं कं सुखं यस्मात्तत् । शु शब्दस्य वैदिकनैघंटुके शीघ्रनामसु पाठात् । सद्योह्यवरुध्यत इत्युक्तत्वाच्च । उ शब्द एवार्थकः । स मुहुरित्यनेनान्वेतव्यः ॥ खादद्रवसंयुतं । खैः इंद्रियैः अद्यंते भुज्यंते ते खादा विषयाः । तेषां मृतं नाशः द्रवः पलायनं चेति यावत् । अकयप्रविसंभूमसखहाविष्णुवाचका इत्यभिधानात् । सं शब्दवाच्यो विष्णुः तेन युतो योगः तत्प्राप्तिरिति यावत् । तथा च खादमृतद्रवसहितः संयुतो यस्मात्तत् । मध्यमपदलोप्ययं समासः। अथवा । शुकमुखादं । ऋतद्रवसंयुतं । इति पदच्छेदः। शुकः वैयासकिः । मुखः प्रमुखो येषु तैर्नारदादिभिः । अद्यते आस्वाद्यते तत् । ऋतस्य ज्ञानसाधनरूपस्य सत्यरूपस्य वा वेदस्य द्रवः रसरूपः अर्थः तेन संयुतं । यद्वा । ऋतस्य ज्ञानरूपस्य विष्णोः द्रवो ज्ञानं । विष्णुविषयकं ज्ञानमिति यावत् । तेन संयुतं । किंवा । शुकमुखात् व्यासपुत्राननात् । निर्गतमिति शेषः । अमृतं मोक्षः तत्साधनरूपो द्रवो ज्ञानं तेन संयुतं पुरीतं । अथवा । शो तनूकरण इति धातोः । शुः अल्पबलीकारित्वान्नकः तस्मात् । को ब्रह्मा मुख्यो येषु तैर्देवैः अदः अपालितो गजेंद्रः देङ् पालन इति धातोः । एवं गजेंद्रमुपवर्णित निर्विशेषं ब्रह्मादयो विविधलिंगभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीदित्युक्तेश्च । तस्य गजेंद्रस्य यन्मृतं मरणं तन्निमित्तो द्रवः कृपाद्रवः तेन सहितः संशब्दवाच्यो भगवान् सः युतः योगं प्राप्तो यस्मिंस्तत् । उत वा । कमुखाः ब्रह्मादयो देवाः । कं ब्रह्मेति श्रुतेः । विष्ण्वादयो देवाः । तेषां आदाः अशोधकाः । दैप् शोधन इति धातोः । तद्विचारशीला इति यावत् । तादृशाश्च ते मृताश्च । मृतं मरणमेषामस्तीति मृतामर्त्याः । अर्श आद्यच् । तेषु द्रवः कृपारसस्तं सम्यक् यातीति कमुखादमृतद्रवसंयुतः तस्य भावः कमुखादमृतद्रवसंयुता यस्मिन्भागवते तत् । रसो वै स इति श्रुतेः । रसो विष्णुः प्रतिपाद्यत्वेनास्त्यस्मिन्निति रसि फलं ।

तच्च व्यर्थाभिधायकं । मल्लाद्यप्रवतित्वरूप एकोऽर्थः । रसभरितत्वरूपो द्वितीयः । तथा च प्रथमेनानिष्टनाशके द्वितीयेनेष्टप्राप्तौ च क्षमत्वात् । द्विविधपुरुषार्थसाधनभूतं ॥ भागवतं । तन्नामकपुराणं ॥ काम्भुवि । के सुखरूपे । अभवि न भवत्यस्मादित्यभूः मोक्षः तद्विषयेऽपि । बत परमादरेण श्रवणादिविद्याभिः सेवत । हृदयगतं यथा भवति तथा कुरुतेति सूचनार्थं पिबतेति प्रयोगः । तदपि न सकृत् अपि तु असकृत् । आवृत्तिरसकृदुपदेशादिति सूत्रात् ॥ ३ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ १–१ ॥

॥ हरिः ॐ ॥ ॥ स एवेति ॥ कौमारं । ब्रह्मपुत्रान्यं सनत्कुमाराख्यं । अन्यथा । कुमारो नाम भगवान्स्वयं स्वस्मादजायत । दिदेश ब्रह्मणे ब्रह्म ब्रह्मचर्यस्थितो विभुः । यस्मात्सनत्कुमारश्चायं ब्रह्मचर्यं प्रपालयत् । यः स्थाणोः स्थाणुतां प्रादाद्भगवानव्ययो हरिरिति ब्राह्मेणविरोधः ॥ ६ ॥ ॥ तृतीयमिति ॥ देवर्षित्वं । महिदासरूपं । अन्यथा । अवतारो तृतीयोऽस्य देवर्षिः प्रथितो भुवि । महिदासस्त्वैतरेयो यस्तत्वं नारदेऽवदिति तात्पर्योक्तिविरोधः ॥ ८ ॥ तुर्यमिति ॥ आत्मशमोपेतं । आत्मानां जीवानां उपशब्दगृहीतात् पापादुपावृत्तिः । उपावृत्तिस्तु पापेभ्यो वासः सर्वगुणैः सह । उपवासः स विज्ञेय इत्यत्र पापादुपवृत्तेरुपशब्देन गृहणात् ॥ शमो । भगवन्निष्ठबुद्धिः । शमो मन्निष्ठबुद्धिरित्येकादशोक्तेः । तदुभयं । उपेतं समीपं प्राप्तं येन तादृशं तपः । अन्यथा । स्वात्मोपशमस्य सदासिद्धत्वेन तपोंऽगत्वमयुक्तं स्यात् । तस्माल्लोकशिक्षणार्थमेव तद्युक्तमिति भावः ॥ ९ ॥ ऋषिभिरिति ॥ पार्थिवं । पृथुदेहाविष्टं । अन्यथा । आविवेश पृथ देवः शंखचक्री चतुर्भुज इति पाद्मोक्तिविरोधः ॥ १४॥ अवातारे इति ॥ षोडशे मे । षोडशसंख्यया मामितिर्यस्य तस्मिन्नवतारे । निःक्षत्रामित्यत्र सशेषः क्षत्रनाशो वा निःशेषः । नाद्यः । निःक्षत्रामित्यनुपपत्तेः । न द्वितीयः । तदभावेनैव पुनर्घातानुपपत्त्या त्रिःसप्तकृत्वा इत्यस्य वैयर्थ्यप्रसंगात् । मैवं । द्वितीयपक्षस्यैवौचित्यात् । न च तत्रोक्तानुपपत्तिः । ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः । द्विजैरुत्पादितं क्षत्रं जामदग्न्यो न्यकृंततेति भारताश्वमेधिकपर्वोक्त्या क्षत्रियाणां स्त्रीभिः प्रार्थितब्राह्मणेभ्यः पुनःपुनरुत्पत्तेः सिद्धत्वात् । ॥२०॥ तत इति । राघवात्पूर्वं व्यासावतारकथने जामदग्न्यरघूद्वहौ वासिष्ठयादवौ कृष्णाविति तंत्रसारोक्तिविरोध इति चेन्न । तृतीयं युगमारभ्य व्यासो बहुषु जज्ञिवानिति कौर्म्योक्तेः॥२१॥ एकोनविंशे इति । बलभद्रस्य श्वेतकेशावेशेनैकोनविंशावतारत्वं न स्वरूपेण । अन्यथा । शंखचक्रभृदीशेशः श्वेतवर्णो महाभुजः । आविष्टः श्वेतकेशात्मो शेषांशं रोहिणीसुतमिति महावराहोक्तिविरोधः ॥ २३ ॥ तत इति ॥ संप्रवृत्ते । समभे समीचीने सुष्टुपूजासुखेषु चेति यावदकोशात् । कैलासं द्वापरस्याभेदात् ॥ प्रवृत्ते । मिश्रिते सतीति यावत् । यद्वा । कलाविति पृथगधिकरणं । तस्मिन् सं अभेदेन मिश्रीभावे सति प्रवृत्ते विद्यमाने

द्वापरयुगसंधाविस्यर्थः । अन्यथा । कलियुगेऽवतारामावकथनं विरुद्धं स्यात । त्रियुगेति नामाप्यनर्थकं स्यात् ॥ २४ ॥ अथेति । युग-संध्यायां । कलियुगाख्ये भागे कृतयुगप्रवेशेनांशसद्भाव इत्यर्थः । द्वापरकृतांशरहित एव कलाववतारनिषेध इति भावः ॥ २५ ॥ कृष्ण इति ॥ कलाः सर्वे हरेरेव । सर्वे कृष्णादयो हरेः कला एव भिन्नांशा एवेत्यर्थः । अंशस्तु द्विविधः प्रोक्तः स्वरूपो भिन्न एव चेत्यादेः ॥ २७ ॥ एते इति ॥ एते । मत्स्यादयस्तु ॥ पुंसः । पुरुषस्य हरेः ॥ स्वांशकलाः । स्वरूपभूतावताराः यस्य तेऽवताराः स कस्माद-वतीर्ण इत्यत उक्तं ॥ कृष्ण इति । स मूलरूपी भगवान् स्वयमेव कुत इत्यतो हेतुगर्भविशेषणं ॥ कृष्ण इति । लये सर्वजगत्कर्षकत्वा-दित्यर्थः । यतः कर्षसि देवेश नियमात्सकलं जगत् । अतो वदंति मुनयः कृष्ण त्वं ब्रह्मवित्तमा इति कृष्णनामनिरुक्तेः । सकलं स्वांशसहितं अभेद इ नेनानर्थप्राप्तिः स्यात् । त्रिविधं जीवसंघं च परमात्मानमव्ययं । तेषां भेदं च ये सत्यं विदुर्मोहविवर्जिताः । ते याति परमं स्थानं विष्णोरत्र च पंडिताः । अन्यथैवं तमो यांति परमात्मविनिंदकाः । मत्स्यादिकलासहितं जगत् कृष्यादिकं चेति प्रमाणवाक्यार्थः । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यत इति श्रुतेः । स्वाप्ययादिति सूत्राच्च । मत्स्यादीनामभेदेन स्वस्मिन्नाकर्षकत्वात् कृष्यादीनां भेदे नात्मन्याकर्षक-त्वाच्च न तस्याप्यन्यरूपमिति भावः ॥ २८ ॥ इदमिति ॥ ब्रह्मसंमितं । ब्रह्मणा वेदेन संमितं तुल्यं । उभयोरेकार्थत्वादेव न त्वपौरुषेयत्वादिनेति भावः । अन्यथा । न च वेदसमं शास्त्रमित्युक्तिविरोधः ॥ ४० ॥ इति श्रीभागवतटिप्पण्यां तृतीयोऽ-ध्यायः ॥ १–३ ॥ ॥

॥ हरिः ॐ ॥ द्वापरे इति । अत्र अष्टाविंशतिमहायुगस्येत्यध्याहार्यं ॥ तृतीये । महायुगतृतीयांशरूपे । ॥ द्वापरे । द्वापरा-ख्ययुगेऽधिकरणे ॥ युगपर्यये । तद्युगपर्यवसाने । समनुप्राप्ते सतीत्यर्थः । अन्यथा । तृतीये युगपर्यये तृतीयमहायुगे इत्यर्थांगीकारे द्वापरेऽथ युगे प्राप्ते त्वष्टाविंशति मे पुनरित्यनेन विरोधः स्यात् ॥ १३ ॥ एवमिति ॥ । नातुष्यत् । अलंबुद्धियुक्तं नासीत् । श्रुत्वा कथां न तुष्यामि हरेरव्यक्तकर्मण इति मात्स्योक्तेः । अन्यथा । सदा संतोषरूपिणमित्यनेन विरोधः ॥ २५ ॥ नेति । अप्रसादोऽ-प्यनलंबुद्धिरेव । कः प्रसन्नो भवेद्दिव्यां कथां शृण्वन्हरेः परामिति तात्पर्योक्तेः । प्रसादश्च हरेस्तु नुरित्यनेनान्यथा विरोधः ॥ २६ ॥ ॥ धृतव्रतेनेति । धृतमेव व्रतं येन तेन । अनेन ममाग्रे धार्यं व्रतं नास्तीति ध्वनितं । जग्धतृणाः पीतोदका इतिवदिदं ज्ञेयं ॥ निर्व्यलीकेन । अविप्रलंभकेन । मया ॥ हि । यस्मात् ॥ अनुशासनं । अनूनां मनुष्याणां शासनं शिक्षणं । अनु शब्दस्य मनुष्यनामसु पाठात् ॥ गृहीतं अंतर्णीतणिचा ग्राहितमित्यर्थः । तस्माच्छंदांसि गुरवोऽग्नयो मानिताः । सदाश्रेयो निभृतस्य चेदमाननं नाप्राप्तश्रेयो लाभार्थ-

मिति भावः । यदिह्यहं न वर्तेयं इत्यादि लोकसंग्रहार्थमेवैतत् । अन्यथा । पूर्णत्वेन विरोधः ॥ २७ ॥ अथेति । ॥ देह्यः । देहरूपः । स्वार्थेऽज्ञ् । अन्यथा । देहदेहिविभागश्च न परे विद्यते क्वचिदिति वचनविरोधः ॥ असंपन्न इव । व्यासावतारे चिर्वापितग्रंथेषु भागवतस्याकृतत्वेन कृत्यपूर्त्यभावात् अकृतकृत्य इवेत्यर्थः ॥ २९ ॥ छंदोगुर्वादिमाननाद्यभावरूपकारणाभावेऽपि आत्मनो कृतकृत्यसदृशत्वे कारणांतरं तर्कयति ॥ किंवेति ॥ प्रायेण । अन्यान् संक्षिप्यैतेषामेव बाहुल्येनेत्यर्थः । अन्यथा । यथा भारते तु देवो न तथाऽन्येषु केषुचित् । उच्यते न तथाऽपीशं जानंत्यज्ञा जनार्दनमिति स्वादोक्त्या विरोधः तस्मादत्र न समस्तानिरूपणं किंतु भारते संकोचाभाव एव कारणमिति भावः । ॥ ३० ॥ तस्येति ॥ तस्य । व्यासस्य ॥ एवं । कृत्यावशेषेण ॥ खिन्नं । अनलंबुद्धिमतं । अतुष्टिरप्रसादश्च खेदोऽतृप्तिस्तथैव च । अनलत्वं वदंत्येते पर्यायवाचका इति ब्राह्मोक्तेः । आत्मानं मन्यमानस्यापि खिद्यतः । खेदयुक्तस्यैव खिन्नस्येत्यर्थः । अन्यथा । आत्माऽपहतपाप्मेत्यादिश्रुतिविरोधः ॥ २१ ॥ तामिति । अप्रत्युत्थाय । प्रत्युत्थानं विना ॥ पूजयामास । सभाजयामास । अन्यथा । गुणज्येष्ठेन गुणयाविष्ठाय प्रत्युत्थानादिके कृते तस्यानिष्टप्राप्तिः स्यादिति प्रसिद्धं । ननु कृष्णेन नारदाय बहुशोऽभ्युत्थानादिकं कृतमित्युक्तं तत्कथमिति चेन्न । स्वस्य क्षत्रियत्वेन नारदस्य ब्राह्मणत्वेन चावताररूपे क्षात्रधर्मपालनार्थत्वात् । अकारस्याप्रश्लेषे तु प्रपितामहस्य वासिष्ठस्य भ्रातृत्वापेक्षयेति ज्ञेयं ॥ ३२ ॥ इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः- ॥ १-४ ॥ ॥

॥ हरिः ॐ ॥ ॥ जिज्ञासितमिति । ॥ शोचसि ॥ प्रकाशसे । अजस्रेण शोचिषाशोशुचान इति श्रुतेः । अन्यथा । शुक्रं तच्छोकराहित्यादिति वाराहेक्त्यादिविरोधः ॥ ४ ॥ अस्त्वेवेति ॥ न परितुष्यते । अलंबुधियुङ्नजायते । श्रुत्वा कथां न तुष्यामि हरेरव्यक्तकर्मण इति मात्स्योक्तेः ॥ ५ ॥ इति श्रीभागवतटिप्पण्यां पंचमोऽध्यायः ॥ १-५ ॥

॥ हरिः ॐ ॥ ॥ निष्पादितमिति ॥ उद्धवात्कृष्णनिर्याणं निशम्य मैत्रेयात्प्राप्तज्ञानेन विदुरेण बोधिते धृतराष्ट्रे वनं गते सति तच्छोकाविष्टं युधिष्ठिरं प्रति नारदोक्तिरियं । ईश्वरः कृष्णः यद्यपि देवकार्यं निष्पादितं तथाऽपि अवशेषं प्रतीक्षते । अतो यावदिहभूमौ भवेत् तिष्ठेत् । यूयं तावदवेक्षध्वं प्रतीक्षध्वं मात्र इत्यर्थोपगमे प्रतीक्षत इति लटा अवेक्षध्वमिति लोटा च वर्तमानभविष्यदर्थकथनमयुक्तं स्यात् । पूर्वमेव कृष्णस्य निर्यातत्वेन भूतार्थस्यापेक्षितत्वात् । अतोऽर्थांतरयोजना ॥ इहभवे । अस्मिन्नवतारे ॥ अवशेषमपि देवकृत्यं । निर्याणरूपं । अद्य अधुना निष्पादितं ॥ यावत् । यदि । ईश्वरः प्रतीक्षते । तावत् तर्हि । यूयं ॥ अवत् । वासुदेववत् ॥ अवेक्षध्वं ।

प्रतीक्षां कुरुध्वं । स एव न प्रतीक्षते तदा भवद्भिरपि न प्रतीक्षा कर्तव्येति भावः । यद्वा । इह भूमौ । यावत् यदि । ईश्वरः कृष्णः । भवेत्तावत् तर्हि । यूयं । प्रतीक्षत । अवशेषमपि देवकृत्यं इ विचित्रं । इ विचित्रे स्मरे पुमानिति यादवः । यथा स्यात्तथा निष्पादितं अवेक्षध्वं । तस्मादत्र भवद्भिर्न स्थेयमिति भावः ॥ ५० ॥ ॥ इति श्रीभागवतटिप्पण्यां द्वादशोध्यायः ॥१--१२ ॥ इति श्रीमद्भागवते पांघरीश्रीनिवासाचार्यकृते विरोधोद्धारे प्रथमःस्कंधः समाप्तः ॥ १ ॥ श्रीकृष्णार्पणमस्तु ॥



॥ हरि ॐ ॥ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॥ इदमिति ॥ द्वापरादौ । द्वापर आदिर्यस्य एतादृशकलिद्वापरयोः संधिकाल इत्यर्थः । तत्पुरुषश्रवणे तु व्यासस्यावतीर्णत्वात्तत्कृताध्ययनमसंगतं स्यात् । अथवा । द्वापरं च आदिश्चेति शंखपटवत्समासः । अचिंत्याव्यक्तीत्यत्रेव द्वापरे वर्तमानकालात्पूर्वं चेत्यर्थः । उतवा । द्वापरादौ । द्वेत्यस्य द्वाविरयर्थः । छांदसत्वादयं प्रयोगः । अस्य छांदसत्वं च ब्रह्मसंमितामिति पदमेव बोधयति । तथा च द्वापरादौ परः सर्वोत्तमो हरिः अदः कर्मफल-भोक्ता जीवः निर्णेयत्वेन यत्र तिष्ठत इति शेषः । तयोरन्यः पिप्पलं स्वाद्वत्तीति श्रुतेः । तत्पुराणमधीतवानिति संबंधः । अन्मिन्दक्षे हे भागवेति संबुद्धिः । भागः जीवब्रह्मविभागः तं वाति जानाति स तथा । वा गति गंधनयोरिति धातुः । गत्यर्थानां ज्ञानार्थत्वाच्च भेदज्ञे-त्यर्थः । अथवा । इदंभागवेत्येकं पदं । अस्य विश्वस्य भागः पंचमहाभेदात्मकः तं वाति जानातीति पूर्ववत् । अथवा । द्वापरादौ संशय-कारणे सतीत्यर्थः । संदेहद्वापरौ चाथेत्यमरः । अथवा द्वापरात् औति इति पदच्छेदः औ रुद्रे स्वस्य मूलजन्मनीत्यर्थः । द्विविधं पंचा-शद्वत्सरात्मककालेनाधीकृतं परं परशब्दवाच्यं आयुर्यस्य स द्वापरो ब्रह्मा तस्मात्सकाशात् । अहमधीतवानीति संबंधः । अथवा । हे द्वाप-रेति राज्ञः संबुद्धिः । द्वाभ्यां जडेश्वराभ्यां परं विलक्षणं । अथवा । द्वौ व्यवहारपरमार्थौ पारयति स तथा । पॄ पालनपूरणयोरिति धातोः । कथं भूतं पुराणं ॥ इदं । अद्भुतज्ञानाधिकरणमित्यर्थः । इ विचित्रे स्मरे पुमानित्यभिधानात् । दं कलत्रदं च बुद्धिदं दाने च दानरीति च । अत एवाध्येयतममित्यर्थः ॥ भागवतं । भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिष्वित्यमरात् । श्र्यादिमतो विष्णोः प्रतिपाद-कमिदं । यद्वा । ऐश्वर्यस्य समग्रवीर्यस्य । यशसःश्रिय इत्यादेः । यद्वा । भानि मेषादिराशीन् गच्छंति तथा विधाः सूर्यादयो ग्रहाः प्रयच्छंति फलं नृणां सदैव तु शुभाशुभमित्युक्तं । यद्वा । भं भवनं मोक्षाख्यं गच्छंति ते भगाः मुक्तियोग्याः तद्वान्विष्णुस्तस्येदं । यद्वा ।

भं भयं पंचकष्टाख्यं गच्छंति ते तमोयोग्याः नियम्यत्वेन तद्वान्विष्णुस्तस्येदं । अनेन मुक्तियोग्यतमोयोग्यनियामकस्वरूपमहिमा हरेरुक्ता भवति । भवनेभः समाख्यातो भोभयेऽपि प्रकीर्तितः । इति वररुचिः । भं शब्देन अश्विन्यादीनि गोगणेशः तेषां नियम्यत्वेन तद्वांस्तस्येदं । अनेन विष्णोः कालचक्रप्रवर्तकत्वं गणेशाय विघ्नसंहर्तृत्वशक्तिदातृत्वं च सूचितं । यद्वा । इदंभागवेति राज्ञः संबुद्धिः । अग्र तदिति प्रसिद्ध्यर्थकं पुराणविशेषणं । विचित्रदंभपर्वतात् गच्छतीति तादृश । वागतिगंधनयोः । दंभरहितेत्यर्थः । अथवा । कामदंभौ पर्वतवदुर्गमत्वेन जानातीति । गत्यर्थानां ज्ञानार्थत्वात् । अथवा । इदं भागेति संबोधनं । अस्य ब्रह्मणः भागो भक्तिरस्यास्तीति । अथवा । हे इदं भाक् इति संबुद्धिः । इदं ब्रह्म भजतेऽसावित्यर्थः । तत्पुराणं ॥ अव । गोपितं कुर्वित्यर्थः । अथवा । इदंभागो इत्युकारांत संबोधनं । इदं ब्रह्म भासयंति तादृशौ गावौ नेत्रे यस्य स इदंभागुः तत्संबुद्धिः । ब्रह्मभासकदृष्टे इत्यर्थः । बहुलं छंदसि । अस्मिन्पक्षे अत इति पदं वासुदेवविस्तारकमित्यर्थकं पुराणविशेषणं । अथवा । ॥ इदं पुराणं । भागवतं ॥ नाम । अष्टादशसहस्रग्रंथात्मकमिदं भगवन्नामेत्यर्थः । इत्थं च यत्र यत्र नाममाहात्म्यं तत्र तत्र भागवतमाहात्म्यमित्यवगंतव्यं । भागवतस्य भगवन्नामत्वात् । अथवा । नामपुराणमित्येकं पदं । नाम्ना पुराणं । अनेन कृत्वा इतरपुराणसदृशं न किंतु नाम्ना पुराणं ततोऽपि महद्विलक्षणमिति ध्वन्यते । अथवा । पुराणं । पुराणि ब्रह्मादि चेतनशरीराणि अणति गच्छति प्रविशतीति तादृशं ब्रह्म । यत्रेति शेषः ॥ संमितं । सम्यक् सर्वोत्तमत्वेन मितं प्रतिपादितं तत् । भागवतमिति संबंधः । अथवा । पुरा सृष्ट्यादौ ब्रह्मसंमितं ब्रह्मणा चतुर्मुखेन सम्यक् उत्तमत्वेन मितं ज्ञानं णं मोक्षसुखं । यत्रेति शेषः । णश्च निर्वृतिवाचक इत्युक्तेः ॥ ८ ॥ इतिभागवते प्रथमोऽध्यायः ॥ २-१ ॥

॥ हरिः ॐ ॥ अत्रैवमाः शंकाः । सूर्यो भगवद्वार्तया यः क्षणो नीतस्तमृते उद्यन्नस्तं च यन् सन् पुंसामायुर्हरतीत्यंगीकारे आयुषः सूर्योदयास्ताधीनप्राप्त्या शतायुर्वै पुरुष इति श्रुतेः । योगिनः कालवंचका इत्यनेन शतोत्तरायुर्वृध्या विरोधः प्रसंगः स्यादिति । अतोऽस्य व्याख्यानं ॥ असौ । प्राणे । अधिकरणबलात्स्थित इति लभ्यते । तत्स्थो भगवानित्यर्थः । यः प्राणे तिष्ठन्निति श्रुतेः । प्राणस्थः प्राणनामासावितिश्रुतेश्च । ॥ उत् । ऊर्ध्वं ॥ यन् । गच्छन् ॥ अस्तं । नीचैश्च ॥ यन् । गच्छन् । उच्छ्वासनिःश्वासरूपेण संचरन्सन्नित्यर्थः । पुंसां आयुर्हरति । तस्यायुषो यः ॥ क्षणः । अवसरः । उत्तमश्लोकवार्तया ऋते नीतः स क्षणो वैयर्थ्ययुक्तः । अव्ययानामनेकार्थत्वात् । नामैकदेशे नामग्रहणमिति न्यायाच्च । यद्वा । पुंसां मध्ये योऽसौ वर उद्यन् उच्छ्वसन् अस्तं यन् निःश्वसंश्च आयुः स्वायुः हरति क्षिणोति । तस्य पुंसः उत्तमश्लोकवार्तयेति । इत्थं भूतलक्षणे तृतीया ॥ उत्तमश्लोकः ।



हंसरूपी नारायणः । तस्य ॥ वार्तया । कथानुसारिप्रवृत्तिः । तया सहितः ॥ क्षणोऽपि । अल्पकालोऽपि ॥ ऋते । ज्ञानविषये । ऋगतावितिधातोर्गत्यार्थानां ज्ञानार्थत्वात् ॥ नीतो भवति । ज्ञानसाधको भवतीत्यर्थः । न व्यर्थो भवतीति भावः । वै शब्दोऽप्यर्थः । सोऽपि कैमुत्यार्थकः । तथाहि । यदा न्यासादिपूर्वके जपे प्रयुक्तोऽल्पकालोऽपि ज्ञानसाधनं भवति तदा सर्वायुस्तथा प्रगीतं चेत् ज्ञानसाधनमिति किमुवक्तव्यमिति । अनेन षट्शताधिकैकविंशति सहस्रश्वासानामेवाहोरात्रमितकालपरिगणनया शतवर्षपर्यंतमायुः कथनपरायाः श्रुतेः सूर्योदयादिनिमित्तकालगणनया आयुषो नियमाभावान्न विरोध इत्युक्तं भवति । सूर्योदयादिना शतवर्षाधिक्येऽपि योगिनां श्वासगणनया शतवर्षापूर्यभावात् । किंच भगवत एवायुर्हरणे स्वातंत्र्येण सूर्यस्य तत्रास्वातंत्र्यं चोक्तं सिध्यति । यद्वा । उत्तमश्लोकवार्तया ऋते यः क्षणोऽस्ति स तस्य विष्णोः अनीत एव असमर्पित एवेत्यर्थः । यद्वा । तस्य विष्णोः श्लोकवार्तया ऋते यः क्षणोऽनीतः न नीतः अपि तु श्लोकवार्तयैव नीतः स पुरुष उत्तम इत्यर्थः ॥ १७ ॥ इति श्रीभागवते तृतीयोऽध्यायः ॥ २-३ ॥ ॥ इति श्रीभागवते विरोधोद्धारे पांधरीश्रीनिवासविरचिते द्वितीयः स्कंधः समाप्तः ॥ २ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ कच्चिदिति । अत्राग्रे पूर्वजन्मनि यो भवान्यो गर्भे धृतस्तमिति श्रीधरीयं व्याख्यानं । स्कंदजन्म तु रुद्रेणाग्निमुखे रेतस्युत्सिक्ते तत्तापात्तेन गंगायामुत्सिक्ते तयाऽपि तापत्रस्तया शरस्तंबे उपन्यस्ते तत्र कृत्तिकाभिः स्वस्वस्तन्यप्राशने कारयिते षण्मुखोऽभूत् तदुपरिष्टात्स्वभर्त्रा सह गच्छंती पार्वती प्रस्तुता सती रुद्रवाक्यात्तं । जग्राह न गर्भे दधारेति पुराणप्रसिद्धं पुत्रत्वेन अतो विरोधस्तस्मादुच्यते। यो गुहः ॥ अंबिकया ॥ उमया ॥ अग्रे । स्वपुरतः॥ धृतः । ललनार्थं स्थापितः । यद्वा । अग्रे आदिसर्गे । अंबिकया । उमायां । धृतः । बुद्ध्यां उमया । स शिवस्त्रिरूपो । मनश्च वैकारिकदेवसंघानित्युक्तौ मनः शब्देन स्कंदेंद्रयोर्ग्रहणात् । यं देवं गुहं व्रताढ्या जांबवती असूत । स सांबः सांबाख्यः ॥ सदृक्षः । पितृ हरः । रथिनामग्रणीः नासीरः ॥ हरेः । कृष्णस्य । सुतः साध्वास्ते कच्चित् हे सौम्योद्धवेति ॥ ३० ॥ क्षेममिति । यतिभिर्दुरापामित्यनेन सिद्धां गतिं मोक्षगतिमित्युक्त सात्यकेः क्षेमप्रश्नस्यानुपपत्त्या विरोधोऽत उच्यते ॥ यतिभिः । यत्नवाद्भिः ॥ दुरापां ।

दुर्लभां ॥ तदीयां गतिं । वैष्णवज्ञानं । गत्यर्थानां ज्ञानार्थकत्वात् । वैष्णवीं स्थितिं वा ॥ ३१ ॥ इति श्रीभागवते प्रथमोऽध्यायः ॥ ३-१ ॥ ॥ ॥ इति श्रीभागवते पांघरींश्रीनिवासाचार्यविरचिते विरोधोद्धारे तृतीयः स्कंधः समाप्तः ॥ ३ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥





॥ हरि ॐ ॥ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ प्रियव्रतेति । अत्रेयमाशंका । उभयोर्युगपत्सार्वभौमत्वं कथं । न च षट्त्रिंशद्वर्षसाहस्रं शशास क्षितिमंडलमित्यनेनोत्तानपादपुत्रस्य ध्रुवस्य मांडलिकत्वं । भूमंडलं जलधिमेखलमाकलय्य कालोपसृष्टमिति स प्रययौ विशालमित्यनेन सार्वभौमत्वसूचनात् । तद्वंशीयानां पृथ्वादीनां सार्वभौमत्वप्रसिद्धेश्च । तर्हि प्रियव्रतवंशीयानां मांडलिकत्वमस्त्विति चेन्न । तेषु जंब्वादिषु बर्हिष्मतीपतिरनुव्रतानात्मजानाग्नींध्रेध्मजिव्हयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिर्वीतिहोत्रसंज्ञान् यथासंख्यमेकैकस्मिन्नेकैकमेवाधिपतिं विदधे इति वचनात्सार्वभौमत्वस्य वैतुल्यसिद्धेरिति । अत्रोच्यते । प्रियव्रतस्योभयोर्मध्ये ज्येष्ठत्वेन सार्वभौमाधिकारित्वेऽपि यो नारदादात्मविद्यामधिगम्येत्यनेन नारदसेवायां रतत्वाद्राज्याकरणेनोत्तानपादीयैर्दश प्रचेतः पर्यंतं सार्वभौमत्वं कृतं । ततः प्रचेतसोंऽतरुदधौ पितुरादेशकारिणः । जपयज्ञेन तपसा पुरंजनमतोषयन् । दिव्यवर्षसहस्रांते पुरुषस्तु सनातनः । तेषामाविरभूत्कृच्छ्रं शांतेन शमयन् रुचेति वाक्येनोक्तकालपर्यंतं राजाभावप्राप्त्या सत्यां ब्रह्मजप्रियव्रतवंशीयैः विरजपर्यंतं कृतराज्यांते पुनः प्रचेतोभिः स्वपितृराज्यं गृहीत्वा दक्षद्वारा चंद्रसूर्यवंशीयानां प्रवृत्तिः कृता । अतो नोभयोर्युगपद्राज्यप्रवृत्तिः ॥ ८ ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ४-९ ॥

॥ हरि ॐ ॥ ॥ सप्तमाष्टमश्लोकयोः पुनरुक्तिर्दृश्यते । अतोऽर्थांतरं । यजमानस्य पृथोः । धर्मदुघा धर्मेण स्वदेहे प्रजाधारणरूपासाधारणधर्मेण क्षत्रधर्मेण वा क्षुधितजनदर्शनजन्यदयादिरूपधर्मेण वा दुह्यते सा भूमिः । सर्वकामदुघा सती सर्वे प्रातिस्विकत्वेनानेके कामा अपेक्षितपदार्था येषां तैर्देवादिभिः दुह्यते सा तथा सती भवती ॥ अथवा ॥ स्वजातिश्रेष्ठत्वरूपो धर्मोऽस्त्येषामिति धर्माः । अर्श आद्यच् । स्वायंभुवादयो वत्सास्तैः दुह्यते स्नुता भवतीति धर्मदुघा सती । अभीप्सितान् दोग्ध्रभिलषितान् । अर्थान् अन्नादिकामान् । दोग्धि स्म दुदुहे । स्म योगेन लडपि भूतार्थे । एवमर्थांगीकारे न पुनरुक्तिभीः ॥ एतमुक्तार्थमाक्षिप्य समाधातुं विजयध्वजीयटीका-

मवतारयति ॥ गोपालेति । गोपालानां तरसानां चतुर्विधान्नजनित्वेनेति पाठो बहुपुस्तकेषु दृश्यते । तत्र तरसानामिति पदं पक्ष्यर्थकत्वेन केनाचिद्व्याख्यातमपि तच्चिंत्यं । तरस शब्दस्य पक्ष्यर्थकत्वेऽनुशासनाद्यभावात् । गोपालानामिति षष्ठ्याश्चासंगतत्वात् । तस्मात्प्रथमलेखकहस्तदोषेण पुस्तकेषु तथा लेखेऽपि व्याख्याकारविवक्षितपाठस्त्वित्थं । गोपालानीतरसानां चतुर्विधान्नवाचित्वेन इत्थं तत्संभव इति तत्राहेति । अस्यार्थः । गौः ग्मेति नैघंटुकात् । भूपालकत्वात्स्वायंभुवो वत्सरूपो गोपालः तेन आनीताः प्रापिता रसा अन्नसंबंधिनः । तेषां चतुर्विधान्नवाचित्वेन लेह्यपेयचोष्यखाद्यभेदेन चतुर्विधान्नस्य भक्ष्यस्य वाचित्वेन अपरपर्यायत्वेनैवेत्यर्थः । तत्संभवः तस्य सर्वकामदोग्ध्रीत्वस्य संभवः संभावना कथं स्यात् । नैव स्यादित्याक्षेपे प्राप्ते तत्र तत्परिहारविषये आह द्रवांति मैत्रेयः । न केवलमिदमेवाश्चर्यं यद्गोरूपिणी भूमिः सर्वकामान् दोग्धीति । किंतु नद्योऽपि सर्वरसान् । तरवो वृक्षाश्च क्षीरदध्यन्नगोरसान् क्षीरान्नं दुग्धौदनं दध्यन्नं दध्योदनं गोरसान् । केवलदुग्धदधिनवनीतघृतादीन् ऊहुः अवहन् । नापि केवलं सामान्यतो वृक्षाः क्षीरान्नादीनूहुः । अपि तु भूरिवर्ष्माणः जरद्गाः मधुच्युतः मधुसारघं च्योतते स्रवति येभ्यस्ते तथा विधाः संतः प्रासूयंत । पत्रपुष्पफलादीनि जनयामासुः । तस्मादाश्चर्यगणे एकमेवाश्चर्यं कर्तुमयुक्तं । पृथ्व्याविष्टहरेर्महिम्नो लोकविलक्षणत्वादिति भावः । ॥ ७–८ ॥ इति श्रीभागवतटिप्पण्यामेकोनविंशोऽध्यायः ॥ ४–१९ ॥ इति श्रीभागवते पांघरश्रीनिवासाचार्यविरचिते विरोधोद्धारे चतुर्थः स्कंधः समाप्तः ॥४॥ श्रीकृष्णार्पणमस्तु ॥



॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः॥ तत्र भगवत इति ॥ तत्र मेरुमूर्ध्नोपरिपूर्वपद्ये मेरोमूर्ध्नीत्युक्त्या तच्छब्देन तस्यैव परामर्शौचित्यात् । उपरीति तु दिवो मूर्धनीत्यभिधास्यमानत्वात् । ननु वामनस्यैकादशादित्यसाम्यं स्यादित्यत उक्तं ॥ भगवत इति । षड्गुणैश्वर्यस्येत्यर्थः । ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरित इत्युक्तेः। अनेन मूलरूपाभेदः सूचितः । तथाऽप्यंशावतारत्वं स्यादित्यतः साक्षादित्युक्तं । पूर्णस्येत्यर्थः । पूर्णमदः पूर्णमिदमित्युक्तेः ॥ यद्वा ॥ अवतारस्यरूपस्येत्यर्थः । तस्यैव प्रत्यक्षदृश्यत्वात् । न हि मूलरूपं प्रत्यक्षग्राह्यं । नाक्षजेनेत्युक्तेः । नन्वस्त्विदं सर्वं । तथाऽपि नायं विष्णुः। त्रिपादत्वस्य च विष्णावप्रसिद्धेः ।अयं तु भूम्या दानकाले त्रिपादो दृष्ट इत्याशंक्य तत्परिहारायाह ॥ यज्ञलिंगस्येति । भगवतस्त्रिपा-

दत्वं स्वर्थापत्तिसिद्धं । कार्यं हि कारणानुमेयं । यथा विनायकोऽथ विश्वस्य ध्यानादैद्वजवक्रतामित्यादिनोक्तेर्गजाननादिश्यमध्यगमुखाभिध्यातुर्विनायकस्य गजमुखत्वापत्तिः । त्र्यक्षनृसिंहध्यानाद्रुद्रस्य त्रिलोचनत्वप्राप्तिः । एवं ध्यातुर्वन्हेरपि त्रिपादत्वप्राप्तिर्ज्ञेया । भगवति त्रिपादत्वं नो चेत्कथं स्यात् । अतस्तदन्यथाऽनुपपत्त्या त्रिपादत्वं भगवतः सिद्ध्यति । अत एव यज्ञलिंगस्येत्युक्तं । यज्ञस्याग्नेर्लिंगं त्रिपादस्वरूपं चिन्हं यस्मात्तस्येति । अन्यथैतद्विशेषणकथनस्यानुपयोगः । न हि वाराहमार्गवद्वामनस्य यज्ञाकारत्वं । त्रिविक्रमरूपध्यानदेवाग्नेस्त्रिपादत्वप्राप्तिर्हि । अतस्त्रिपादकत्वकथनायैव यज्ञलिंगस्येत्युक्तं । यज्ञलिंगत्वादयमग्निरेव स्यादित्यतो विष्णोरित्युक्तं । तथाऽप्यूर्ध्वाण्डकटाहभेदस्तु दुर्घटः । पादस्य भूनिक्षेप्यत्वादित्यत आह ॥ विक्रमत इति । विशेषेण त्रिलोकव्यापनरूपविशेषेण क्रमतः पादनिक्षेपं कुर्वत इत्यर्थः । ऊर्ध्वलोकं क्रमतः पादस्यांगुष्ठनखनिर्भिन्नत्वमूर्ध्वाण्डकटाहस्य युज्यत इति भावः । अथाऽपि (प्रासंगिकारंभः) वामनेन स्वपदा यदा भूरुन्मानिता तदाभूमिस्थवस्तूनां तद्भारेण कथं न विनाश इति चेत् । भूम्यपेक्षयाऽत्युच्चयोर्दक्षिणोत्तरयोर्लोकालोकाचलयोः पार्ष्णिप्रपदयोः स्थापनेन मध्येऽन्तरिक्षस्य सत्त्वाद्भारासंभवेन न भूगतवस्तुविनाशः । ननु यत्पूर्वमुक्तं तद्रीत्या स्वर्लोकस्यापि तिर्यङ्माने कृते दक्षिणाद्यन्यतमदिक्स्थांडकटाहस्यांगुष्ठनखेन भेदसिद्ध्योर्ध्वाण्डकटाहभेदानुपपत्तिरिति चेन्न । अभिप्रायसद्भावात् । तथा हि । यद्यपि केनचित्पुरुषेण कतिचिद्धस्तमितभूमौ भूम्यादिना गृहीतायां सत्यां तत्सामंतिकप्रदेशे तत्स्वामित्वाभावेऽपि यावदिच्छमूर्ध्वं स्वामित्वधारणेन प्रतिबंधः । तथाऽपि काभ्यां चिद्धस्ताभ्यां द्विनलगृहीतस्योर्ध्वाधरभागे प्रातिस्विकत्वेन स्वीकृतौ चेद्यावदिच्छमूर्ध्वं स्वामित्वस्य प्रतिबंधोऽपि भवतीति न्यायेन तन्निवृत्तये ऊर्ध्वमानस्याप्यावश्यकत्वात्तिर्यक्पादनिक्षेपमानेन सर्वां पृथिवीं स्वीकृत्य ब्रह्मांडखर्परपर्यंतमूर्ध्वप्रदेशमपि द्वितीयेन पादोन्मायादातुकामः ऊर्ध्वांगुलिकपादं विदध इति नोर्ध्वाण्डकटाहभेदानुपपत्तिः । न चोन्मानरूपपदस्य पार्श्वभागाव्याप्ताविति शंक्यं । चतुर्विंशत्यंगुलं कुंडमित्युक्तेः पूर्वपश्चिमदक्षिणोत्तरभागसाम्यस्यैव दर्शनात् । तस्मात्क्षेत्रफलं नवपदं सिद्धं । अतश्चतुर्दशभुवनेषु मध्ये स्थूलमानेन नवभुवनानि नवपदमानेन स्वीकृत्य दातृप्रतिज्ञापूर्तिमनुग्रहनो वांछन् दशमे भुवने सुतलाख्ये तं न्यवेशयत् । अनेन यत्तेनोक्तं पदं तृतीयं कुरु शीर्ष्णि मे निजमिति तदपि प्रार्थितं सफलीकृतं भवति । सुतलस्थबलेः शिरस्येव नवभुवनानां सत्त्वेन सप्तलोकानां पदद्वयेनाक्रांतत्वेऽपि अतलवितलयोस्तृतीयपदेन स्वीकृतत्वात् । अत एव तस्य पदस्थैतज्जनादृष्टत्वं । किंचाधिकाधिकपुण्यवद्भिरुत्तरोत्तरलोका आश्रीयंते । तथा दुष्कृतिभिरधोलोकाः । तथा चेद्दशादनर्तुः कथमधोलोकप्राप्तिर्युज्यत इत्यतः सर्वतलेष्वपि तत्स्वावासेन सुतलं कृत्वा भगवान्ददौ । तस्मै दत्तभूम्यां न स्थेयमिति बलिनाऽपि सुतलमाश्रितं । अधोलोकगतिस्तु मम भूम्या अहं दातेत्यभिमानदातृत्वात् । अतो नेदृक् क्षुद्रदोषाव-

काशः । अतो भोगावत्या अपि तलप्राप्तिर्युज्यते । यतो येन पादेनोर्ध्वांडकटाहं निर्भिद्य ब्रह्मांडद्वितीयावरणोदकमानीतं तस्मादेव सुतले बलिद्वारपालवत्स्थितस्य हरेरार्द्रपादात्प्रवाहसंभवात् । अस्त्वेतत्सर्वं । तथाऽपि भगवतो नियमो येन यत्समर्पितं तत्तस्मै संवर्ध्य देयं । तर्हि बलये राज्यं किं न दत्तवानिति चेत् । श्रूयतां । सप्तमे मन्वंतरे बलिना वामनायारंभसमय एव न भूर्दत्ता । किंतु किंचिद्युगानंतरमेव । तदैव राज्यदाने शेषमन्वंतरपर्यंतमेव तद्दानसिद्ध्या दत्तस्य वृद्धिर्न घटेत इति मत्वाऽष्टममन्वंतरस्यारंभादेवेंद्रत्वे दत्ते शेषमन्वंतरेंद्रत्वग्रहणापेक्षया वृद्धेरपि संभवात्तदैव न ददाविति । अथाष्टमस्कंधे बलिशिरसि भगवत्पादानिक्षेपस्यानुक्तत्वेऽपि केवलतत्प्रार्थनयैव केचिद्बलिकृतमात्मदानं वर्णयंति । तत्पक्षेऽपि प्रत्यात्मदानं संवर्ध्य भगवता कुतो न दत्तमिति शंक्यं । बल्यात्मनः सकाशाद्भर्यात्मनश्चिदानंदत्वेनातिवृद्धिसंभवात्तादृशात्मनो द्वारपालत्वेन प्रत्यर्पितत्वादिति । भृगुवत्सक्षेत्रसंज्ञकं यज्ञस्थलं विहाय मेरुत ऊर्ध्वताया उन्मानं किं कृतमित्यपि न शंक्यं । सर्वतो वर्तुलाकारस्य ब्रह्मांडस्योत्तराधरभागमध्ये भूमेरेव सत्वेन तस्या एव विस्तीर्णत्वात्तदन्ययोरुत्तराधरयोर्ह्रसितत्वाच्च तत एव तिर्यङ्माने कृते । तथा सामंतिकप्रदेशमध्ये मेरोरवस्थितत्वेन तदुपरिस्थभागस्यैवात्युच्चत्वात्तत्सामंतिकभागस्य ह्रसितत्वाच्च तत एवोर्ध्वतोन्माने च कृते तत्साम्येनान्यप्रदेशानामपूर्तिमप्यंगीकृत्येदं शेषमिति बलिना निर्वक्तुमशक्यत्वस्यापेक्षितत्वात् । नन्वंडमध्यस्थभूप्रदेशस्यैवातिविस्तीर्णत्वात्तत एव तिर्यङ्मानं कृतमित्युक्तं । तत्र भूदेशस्यैव कियन्मानमिति चेत् । उच्यते ॥ पंचाशत्कोटिविस्तार इति । तथाहि । अत्रांकन्यासादेव परिमाणं बोद्धव्यं । मेरुमध्यतो मेरोरर्धमष्टसहस्रयोजनानि ( ८,००० ) । ततः क्षाराब्धिपर्यंतं द्विचत्वारिंशत्सहस्रयोजनानि ( ४२,००० ) । एवं जंबुद्वीपार्धं पंचाशत्सहस्रयोजनानि ( ५०,००० ) । ततः क्षाराब्धिर्लक्षयोजनः ( १००,००० ) । ततः प्लक्षद्वीपं द्विलक्षयोजनं ( २००,००० ) । तत इक्षुरसोदः द्विलक्षयोजनः ( २००,००० ) । ततः शाल्मलीद्वीपं चतुर्लक्षयोजनं (४००,०००)। ततः सुरोदश्चतुर्लक्षयोजनः (४००,०००)। ततः कुशद्वीपं अष्टलक्षयोजनं (८००,०००)। ततो घृतोदोऽष्टलक्षयोजनः (८००,०००)। ततः क्रौंचद्वीपं षोडशलक्षयोजनं (१,६००,०००)। ततः क्षीरोदः षोडशलक्षयोजनः १,६००,०००)। ततः शाकद्वीपं द्वात्रिंशल्लक्षयोजनं (३,२००,०००)। ततो दधिमंडोदो द्वात्रिंशल्लक्षयोजनः (३,२००,०००) । ततः पुष्करद्वीपांतरर्धं पंचनवतिसहस्रोत्तरैकत्रिंशल्लक्षयोजनं (३,१९५,०००) । ततो मानसोत्तरगिरेरंतरर्धं पंचसहस्रयोजनं (५,०००) । बाह्यार्धं पंचसहस्रयोजनं ( ५,००० ) । एवं मानसोत्तरगिरिर्दशसहस्रयोजनः ( १०,००० ) । ततः पुष्करद्वीपबाह्यार्धं पंचनवतिसहस्राधिकैकत्रिंशल्लक्षयोजनं ( ३,१९५,००० ) । एवं सर्वं पुष्करद्वीपं चतुः षष्टिलक्षयोजनं ( ६,४००,००० ) । ततः शुद्धोदश्चतुःषष्टिलक्ष-

योजनः (६,४००,०००)। एवं मिलित्वा मेरुमध्याच्छुद्धोदपरतीरपर्यंतं सार्धत्रिपंचाशल्लक्षोत्तरद्विकोटियोजनानि (२५,३५०,०००)। कोटिद्वयं त्रिपंचाशल्लक्षाणि च ततः परं। पंचाशत्सहस्राणि सप्तद्वीपाः ससागराः। इति शैवतंत्रोक्तेः। ततः प्राणिसंचारयोग्या भूमिः सार्धसप्तपंचाशल्लक्षाधिकैककोटियोजना ( १५,७५०,००० )। यावन्मानसोत्तरमेर्वोरंतरं तावती भूमिरित्युक्तेः। ततो देवक्रीडनार्था कांचनी भूमिश्चतुर्दशलक्षोत्तरद्विकोटियोजना ( २१,४००,००० )। एवं संनिपत्य मेरुमध्यमारभ्य लोकालोकाचलपर्यंतं सपादषट्कोटियोजानि (६२,५००,०००)। न चात्र ततो हेममयी भूमिर्दशकोट्यो वरानने। देवानां क्रीडनार्थाय लोकालोकस्ततः परमिति वाक्यविरोधः। एतद्वाक्यात्पूर्वत्र कोटिद्वयं त्रिपंचाशादित्यादिवाक्यसद्भावात्सार्धत्रिपंचाशल्लक्षाधिकद्वादशकोटिरूपमानसिद्धो सत्यां कुंडार्कादौ किंचिदाधिक्यस्य दोषाभावोक्त्या प्रकृते कोटिसंख्यायां सार्धत्रिलक्षस्य किंचित्त्वेन दोषाभावादाधिक्यस्यागणनीयत्वेनास्य वाक्यस्य लोकालोकाचलमारभ्य लोकालोकपर्यंतं सार्धद्वादशकोटिकथनपरत्वेन मेरोरेकतः सपादषट्कोटि योजनानामेवोपपत्तेः। ततो लोकालोकाचलविस्तारः सपादषट् कोटियोजनः (६२,५००,०००)। न च स तु पंचाशत्कोटिगणितस्य भूगोलकस्य तुरीयभागोयं लोकालोकाचल इत्यनेन विरोधः। अस्य पूर्वोत्तरलोकालोकाचलविस्तृतिगणनाविषयत्वात्। नापि यस्मात्सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोऽर्वाचीनास्त्रिलोकानां वितन्वाना न कदाचित्पराचीना भवितुमुत्सहंते तावदुन्नहनायाम इत्यनेन विरोधः। तत्र भूमंडलाद्ध्रुवमंडलपर्यंतमेकोनत्रिंशल्लक्षयोजनमुन्नहनमुत्सेधस्तस्यायामोविस्तारः अग्रविस्तार एव न मूलविस्तार इत्यर्थः। एतदर्थपरत्वात्। तस्माल्लोकालोकस्य मूले उक्त एव विस्तारः। ततस्ततो भूमिः सपादषट्कोटियोजना (६२,५००,०००)। योंऽतर्विस्तार एतेन ह्यलोकपरिमाणं च व्याख्यातमित्युक्तेः। ततो योगेश्वरगातिभूमिः सपा दट्कोटियोजना (६२,५००,०००)। एवं मेरुमध्यसकाशात्तिर्यङ्मानेन ब्रह्मांडखर्परं पंचविंशतिकोटियोजनं (२५०,०००,०००)। एवमेव मेरुमध्योत्तरतोऽपि पंचविंशतिकोटियोजनानि ( २५०,०००,००० )। अत एव खर्परात्प्रतिखर्परपर्यंतं पंचाशत्कोटियोजनानि ( ५००,०००,००० )। एवं पंचाशत्कोटियोजनविस्तारः सिद्धः। न चांडमध्यस्थसूर्याधस्ताल्लक्षयोजनस्थपृथिवीमध्यभागायोगेन पंचाशत्कोटिविस्तीर्णता सिद्धिरिति वाच्यं। पंचाशत्कोटिषु लक्षस्य किंचित्त्वेन दोषावहत्वाभावस्योक्तत्वात् न्यूनताया अकिंचित्करत्वात्। अतो न शंकावकाशः। इत्यलं प्रासंगिकेन॥ ॥ सामान्यतो विक्रमत इत्युक्तं। तथाऽपि केन पादेनेति न स्पष्टीकृतमत आह॥ वामेति। दक्षिणेतरेत्यर्थः। इदं तु वाराहे कल्पे नान्येषु। वाराहे वामपादं तु तदन्येषु च दक्षिणं। पादं कल्पेषु भगवानुज्जहार त्रिविक्रम इति भागवतपंचमतात्पर्योक्तेः। अन्यकल्पपक्षे वामशब्दादौ अकारं प्रश्लिष्य दक्षिणरूपार्थो ग्राह्यः॥ ऊर्ध्वांडेति। ननु ब्रह्मांडांत-

रालापेक्षया पादमानस्याधिक्ये सिद्धे ऊर्ध्वांडकटाहस्फोटः स्यात् । तर्हि तेनैव पार्श्वकटाहस्फोटोऽपि भवेत् । स किंन जात इति चेन्न । पातालादिचतुस्तलानि विसृज्य वितलादेवोर्ध्वमाने पादस्य स्थापितत्वादाधिक्यसंभवेनोर्ध्वकटाहस्फोटेऽपि ब्रह्मांडांतरालपरिमितपादस्यांगीकृतत्वात्कटाहमारभ्य कटाहपर्यंतमुन्माने आधिक्यासंभवात् ॥ बाह्यजलधारेति । ब्रह्मांडावरणेषु प्रथमपार्थिवावरणाद्बाह्यं यद्द्वितीयजलावरणं तज्जलधारेत्यर्थः । ॥ तच्चरणेति । तच्छब्देन विष्णोर्ब्रह्मांडकटाहभेदकस्य वा परामर्शः ॥ अरुणेति । पंकजकिंजल्कस्य पीतत्वादरुणेति कथमिति चेत् । तच्चरण एव पंकजं तस्यावनेजनेन प्रक्षालनेनारुणाः ये किंजल्कस्थानीया नखास्तैरुपरंजिता तेषां प्रतिबिंबितत्वेन रक्तीकृतेत्यर्थः । साक्षात्पंकजस्य पीतकिंजल्कत्वेऽपि पादोत्प्रेक्षितपंकजस्य रक्तनखरूपकिंजल्कत्वान्ज्ञेयं ॥ अखिलेति । अखिलं यज्जगत् तस्याद्यं पापं मलं मृदादिजन्यं चापहंति तादृशमुपस्पर्शनं स्नानं यस्याः सा ॥ अमलेति । शुद्धा श्वेतोदका वेत्यर्थः ॥ साक्षादिति । प्रतीकानंतःस्थस्य भगवतः संनिधानस्थानभूतेति । अनुपलक्षितैर्मुख्यार्थैर्वचोभिरभिधीयमाना प्रोच्यमाना । या बाह्यजलधारेत्यत्र यो यच्छब्दस्तद्वशादत्र सेति वक्तव्यं । सा बाह्यजलधारारूपा गंगेत्यर्थः ॥ यद्वा ॥ तच्चरणेत्यत्र तया धारया यच्चरणपंकजस्यावनेजनं क्षालनं तस्मिंस्तेन निमित्तेन वा । अरुणा रक्ता ये किंजल्कस्थानीया नखास्तेषामुपरंजितं प्रतिबिंबितं यस्यां सेति यत्तच्छब्दयोर्योजना ॥ युगसहस्रोपलक्षणेन । युगानि चतुर्युगात्मकानि महायुगानि तेषां सहस्रं । चतुर्मुखदिनमित्यर्थः । चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यत इत्युक्तेः । तत् उपलक्षणं यस्य तेन । अनेन तावती रात्रिरपि गृह्यते । तावत्येव निशा तात यन्निमीलति विश्वसृगित्युक्तेः । ईदृशेन ब्रह्माहोरात्रात्मकेनातिमहता कालेन दिवौ द्युलोकस्य मूर्धनि उपरिभागेऽवततार । अवतीर्णाभूत् । ( अथ प्रासंगिकांतरारंभः ) । गंगाया ब्रह्मप्राग्दिनावतारादुत्तरदिने गंगावतरणस्याहोरात्रात्मकावकाशेन कालस्यातिमहत्त्वं ज्ञेयं । ब्रह्मप्रतिकल्पं सकृद्दशावताराणां प्रवृत्त्या वामनावतारेणैव गंगावतरणस्य प्रवर्तनादिति भावः । ननु सकृद्वामनांघ्रिनखभिन्नस्यांडखर्परस्य पुनर्मीलनाभावात्प्रतिकल्पं वामनावतारेण गंगायाः प्रवर्तनीयत्वं न सेत्स्यतीति चेन्न । प्रथमावरणस्य पार्थिवत्वेन खातपूरवरेणेत्याद्युक्त्याऽवशिष्टत्रेताद्वापरकलिपंचसहस्रवर्षात्मककालेन पूरणसंभवात् । अत एव कलौ पंचसहस्रवर्षपर्यंतमेव गंगामाहात्म्योक्तिः । पार्थिवजलेन प्रवाहदर्शनेऽपि ऊर्ध्वछिद्रपूरणेन हरिपादस्पृष्टबाह्योदकधारायाः खंडितत्वात् । ननु च दशावताराः किं प्रतिमहायुगं भवंत्युत प्रतिमन्वंतरमथ सकृत्कल्पे । नाद्यद्वितीयौ । कल्पजीविनां हनुमदादीनां ब्रह्मकल्पादावनेकत्वोपलब्धिप्रसंगात् । न तृतीयः । वैवस्वतमन्वंतरीयाष्टाविंशतिमहायुग एव तत्प्रवृत्तावेकोनसहस्रमहायुगेषु तदप्रवृत्तौ च कारणाभावात् । धर्मविवर्धनमूलयुगादे इति वाक्येन कल्किनः कृतयुगकारणत्वेन श्रीमदाचार्यैरभिधानात्सर्वकृत-

युगानुपपत्तेश्च । अन्यथाऽकारणकार्योत्पत्तिप्रसंगात् । मैवं । प्रतिकल्पे सकृदेवेत्यंगीकारात् । न चाष्टाविंशतिमयुग एव प्रवृत्तौ कारणाभावः । पंचधा विभक्तस्य दिनस्य तृतीयांशरूपमध्यान्हे ब्रह्मणो दशावताराणां पूजार्थमपेक्षितत्वात् । नापि मूलयुगाद इति वाक्यस्य सर्वकृतयुगानां चानुपपत्तिः । मूलयुगाद इत्यस्याष्टाविंशतिमहायुगांत्ययुगैकपरत्वेन सर्वकृतयुगकारणत्वाभवात् । तेषां च मरुदेवापिनृपादि प्रवर्तनीयत्वात् । तस्माद्ब्रह्मणः प्रतिदिनं मध्यान्ह एव स्नानार्थं गंगावतरणस्यौचित्यं । अतो ब्रह्मप्रतिदिनं गंगावतरण एव महायुगसहस्रोपलक्षणः कालोऽपेक्षितः । ऊर्ध्वांडकटाहनिर्गतजलस्य ध्रुवलोकागमने युगसहस्रात्मककालोऽतिक्रांत इत्यर्थांगीकारेऽतिसाहसं । न हि गुरुजलपतने एतावानवकाशोऽपेक्षितः । प्रत्यक्षबाधात् । तथाहि । अंडमध्यगतः सूर्यो द्यावाभूम्योर्यदंतरं । सूर्यांडगोलयोर्मध्ये कोट्यः स्युः पंचविंशतिरित्युक्तेः । अंडमध्यस्थसूर्यसकाशादुपरि चंद्रमंडलं लक्षयोजनं ( १००,००० ) । ततो नक्षत्रमंडलं त्रिलक्षयोजनं (३००,०००) । तत शुक्रः द्विलक्षयोजनः (२००,०००) । ततो बुधो द्विलक्षयोजनः ( २००,००० ) । ततो भौमो द्विलक्षयोजनः (२००,०००) । ततो गुरुर्द्विलक्षयोजनः ( २००,००० ) । ततः शनिर्द्विलक्षयोजनः ( २००,००० ) । ततः सप्तर्षय एकादशलक्षयोजनाः ( १,१००,००० ) ततो ध्रुवस्त्रयोदशलक्षयोजनः ( १, ३००,००० ) । एवं मिलित्वा सूर्योपरि ध्रुवपदं अष्टत्रिंशल्लक्षयोजनं ( ३,८००,००० ) । तदेव विष्णुपदं । यत्तद्विष्णोः परमं पदमभिवदंति यत्र महाभागवतो ध्रुव इत्याद्युक्तेः । तत उर्ध्वांडखर्परं द्विषष्ठिलक्षाधिकचतुर्विंशतिकोटियोजनं ( २४६,२००,००० ) । इत्यंतरिक्षमार्गेणोर्ध्वांडखर्पराज्जलस्य ध्रुवलोकागमने किंचित्कालाधिकचतुर्मासोत्तरपंचदशाधिकाद्विशतोत्तराद्विचत्वारिंशसहस्रवर्षात्मकः ( ४२२१५४ ) कालोऽपेक्षितः । यतो दीर्घवर्णोच्चारणकालेन चतुर्हस्तमिताधःस्थले जलं पतति । दीर्घषड्वर्णोच्चारणे नैकश्वासोऽस्ति । तेन चतुर्विंशतिहस्तं । एवं षट्श्वासैरेकं पलं । तेन चतुश्चत्वारिंशदधिकैकशतहस्तं । तत् षष्ठ्यैका घटी । तया चत्वारिंशदधिकषट्शतोत्तराष्टसहस्रहस्तं ( ८, ६४० ) । तत् षष्ठ्यैकमहोरात्रं । तेन चतुःशताधिकाष्टादशसहस्रोत्तरपंचलक्षहस्तं ( ५१८,४०० ) । तत्त्रिंशतैकमासः । तेन द्विपंचाशत्सहस्राधिकपंचपंचाशल्लक्षोत्तरैककोटिहस्तं ( १५,५५२,००० ) । अनेन चतुश्चत्वारिंशदधिकनवशतोत्तरैकसहस्रक्रोशा भवंति ( १,९४४ ) । तैर्योजनानि षडशीत्यधिकचतुःशतमितानि ( ४८६ ) । तस्मान्मासेन षडशीत्युत्तरचतुःशतयोजनं गच्छति । मासद्वादशकेन वर्षं । तेनाष्टशतोपरिद्वात्रिंशदधिकपंचसहस्रयोजनं ( ५, ८३२ ) पतति । तस्माद्द्विषष्ठि लक्षाधिकचतुर्विंशतिकोटियोजनमितेन ध्रुवांडकटाहयोर्मध्यगतांतरिक्षेण ध्रुवलोके गंगापतने किंचित्कालाधिकचतुर्मासोत्तरपंचदशाधिकद्विशतोत्तरद्विचत्वारिंशत्सहस्रवर्षात्मकः कालोऽपेक्षितः ॥ न युगसहस्रात्मक

इति । ननु सूर्योपरिष्टात्पंचविंशतिकोटियोजनांतरसिद्धावप्यधस्तात्तावन्न सिध्यति। सूर्याधो लक्षयोजनांतरस्थितभूमेरधो लक्षयोजनांते शेषस्थित्युक्तेरिति चेन्न । शेषभोगस्य द्विलक्षोनपंचकोटिमितोर्ध्वतासद्भावात् । तदधस्ताच्च वायुरूपकूर्मस्य दशकोटियोजनोच्छ्रितत्वात् तस्याप्यधो विष्णुरूपकूर्मस्य तावदुच्छ्रितत्वात् । ततोऽधस्तादधरखर्परस्य स्थितत्वात् । बिभर्त्येडं हरिः । कूर्मस्त्वंडे चाप्युदकं महत् । उदके कूर्मरूपस्य वायुः पुच्छं समाश्रितः । वायोः पुच्छं समाश्रित्य शेषस्तु पृथिवीमिमां । बिभर्ति तस्यां च जगदिदं सर्वं प्रतिष्ठितमिति बृहद्भाष्योदाहृतवैभवस्थवचनात् । एतन्मानस्याप्यन्यत्रोक्तेः । अतः सूर्याधः खर्परयोः पंचविंशतिकोट्यंतरता सिध्यतीत्यलं प्रासंगिकांतरेण ॥ ॥ यत्तद्विष्णुपदमाहुरिति । यत् दिवोमूर्धस्थानं ध्रुवपदं तत् तदुपरि खर्परपर्यंतं विष्णुपदं आकाशं । वियद्विष्णुपदं वाऽपीत्युक्तेः ॥ यद्वा ॥ विष्णुपदं विष्ण्वंघ्रिस्थानीयं आहुः । ज्ञानिन इति शेषः ॥ अथवा ॥ यत् ध्रुवपदं विष्णुपदं विष्णोर्लोकं ज्ञानिन आहुः । तत् । तस्मिन् दिवो मूर्धस्थानेऽवततारेत्यन्वयः ॥ उत वा ॥ यत् यत्र दिवोमूर्धनि विष्णुपदं तत् विस्तृतं । तनु विस्तार इति धातोः । ततः क्विप् ज्ञानिन आहुरित्यर्थः ॥ १ ॥ इति श्रीभागवतटिप्पण्यां सप्तदशोऽध्यायः ॥ ५–७ ॥ ॥

॥ हरिः ॐ ॥ तस्येदमिति । क्षितिमंडलं । क्षिति निवास गत्योरिति धातोरित्यतोऽधिकरणे क्तिचि । क्षिति शब्दवाच्यानां चतुर्दशभुवनानां मंडलं गोलकमित्यर्थः । न केवलं पृथिव्या मंडलं । तथात्वेऽर्थानुपपत्तेः । तथाहि । पातालादिसप्ततलातिरिक्तभूमेः शेषशीर्षध्रियमाणत्वांगीकारे शेषः किमतलस्थो वा पातालस्थो वा ब्रह्मांडखर्पराधस्तो वा । नाद्यः । पातालस्थत्वोक्तिविरोधात् । न द्वितीयः । रसाततलाद्यतलांतषट्तलानां मध्याच्छिद्रत्वप्रसंगात् । अन्यथा पृथिवीसंबंधायोगात् । न हि तदंगीकारो युक्तः । क्वाप्यश्रवणात् । न तृतीयः । पातालस्थनागराजकुमारीणां यस्यैव हि नागराजकुमार्य इत्यादिनोक्तस्याधःस्थशेषवदनालोकस्यानुपपत्तेः । न हि ब्रह्मांडखर्परस्य गवाक्षाणि । तासां वा बहिःस्थितिः । येन तदुपपन्नं स्यात् । तस्माच्चतुर्दशभुवनमंडलमेव शेषशीर्षस्थं युक्तं । न चैतद्युक्तं । अमुक्तशेषस्य ब्रह्मांडबहिः संचरणासंभवेन चतुर्दशभुवनधारणायोगात् । न च पातालस्थ एव बिभर्तीति युक्तं । यत्र स्वयं स्थितः तस्य शीर्ष्णि धारणानुपपत्त्या त्रयोदशानामेव धारणप्रसंगात् । मैवं । द्वितलात्मकस्य पादतलस्याधस्तले स्थित्वोर्ध्वतलस्य शिरसा धृतत्वांगीकारेण चतुर्दशस्य धारणोपपत्तेः । ततोऽधस्तात्पाताले नागलोकपतय इत्यारभ्य तस्य मूलदेशे त्रिंशद्योजनसहस्रांतरे आस्ते । या वै कला भगवतस्तामसी समाख्यातानंत इति सात्वतैरित्युक्तेः । न च नागकन्यावलोकनानुपपत्तिः । उभयोस्तलयोरेकतलत्वेन तत्रस्थानामुभयत्रापि प्रवेशोपपत्तेः । तथाऽपि सिद्धार्थ इवेति दृष्टांतो न युज्यते । शेषशीर्ष्णोऽतिमहत्वानुपपत्तिरिति चेत् । सर्षपदृष्टांतो

नाणुत्व विषये किंतु लघुत्वविषय इत्यंगीकारात् । तथा च शेषेणोक्तदलक्षितिमंडलस्य सर्षपगुरुत्वसदृशत्वेन माननात् । तत्र दृष्टांतोपपत्तिः । एवं चेदूर्ध्वतलापेक्षया शेषशीर्ष्णोऽल्पत्वे सर्वफणास्वपि क्षितिमंडलस्य स्थितिप्रसंगेनैकस्मिन् शीर्ष्णीत्युक्त्यानुपपत्तेरिति चेन्न। सर्वफणास्वपि मध्यमफणया एवौन्नत्येन तदुपपत्तिसंभवात् । न च सहस्रफणत्वेन समफणत्वादेकस्य मध्यमस्यैवासंभव इति वाच्यं । द्वयोर्मध्यस्थत्वेऽपि एव शब्देनेतरान्यतमव्यवच्छेदात् । अन्यथैक शब्देनैवेतरव्यावृत्तौ एव शब्दस्य वैयर्थ्यापातात् । तस्माद्युक्तमुक्तमिति गुणग्राहिभिः संतोष्टव्यं ॥ ३३ ॥ इति श्रीभागवतटिप्पण्यां त्रयोविंशोऽध्यायः ॥५–२३॥ इति श्रीभागवते पांघरी श्रीनिवासाचार्यविरचिते विरोधोद्धारे पंचमः स्कंधः समाप्तः ॥ ५ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

॥ हरि ॐ ॥ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ ॥ अथ द्वापरे सत्सु सदयबुद्धिभिर्ब्रह्मादिभिरर्थितो भगवान् व्यासात्मना भूमाववतीर्य तदज्ञाननिवर्तक महाभारतादि नानाग्रंथान्कृत्वा कृत्यशेषपूरकश्रीनारदप्रार्थनया श्रीमद्भागवतं कुर्वन् सतां त्रिविधतापभयनिवृत्त्यै सर्ववेदमातृगायत्र्यर्थरूपविष्णुगायत्रीप्रतिपादितरूपत्रयमंत्राक्षरदैवतविष्णुरूपाणां सर्वतो रक्षणप्रार्थनात्मकनारायणवर्मात्मकं स्तोत्रं पठणादीच्छूनां विश्वासजननायेहोपक्षिप्तेतिहासोपोद्धातसंगत्योपनिबबंध । यो ह वा अविदितार्षछंदोदैवतब्राह्मणेन मंत्रेण याजयीत वाऽध्यापयीत वा स्थाणुं वर्च्छति गर्तेवापद्यते प्रवामीयते इति श्रुतेरृष्यादि ज्ञानं विनाऽनर्थप्राप्तेः । ऋष्यादिकं वक्तुं तावद्राजप्रश्नमुपन्यस्तवान् ॥ राजोवाचेति । यया नारायणवर्ममूलगायत्र्याख्यविद्यया गुप्तो रक्षितः सहस्राक्ष इंद्रः सवाहान् वाहनसहितान् । निर्वाहकसेनापतियुक्तान्वा । रिपुसैनिकान् शत्रुभूतदैत्यसेनास्थवीरान् क्रीडन्निव लीलयैवेत्यर्थः । विनिर्जित्य पुनर्युयुत्साऽभावरूपविशेषेण जित्वा । त्रिलोक्याः त्रयाणां पातालभूस्वर्गाख्यानां । भूर्भुवः स्वराख्यानां वा । लोकानां समाहारस्त्रिलोकी तस्याः श्रियं संपदं । आधिपत्यमिति यावत् । बुभुजे भुक्तवान् । यत्तदोर्नित्यसंबंधाल्लिंगविपरिणतेनोत्तरस्थेन तन्ममाख्याहीत्यत्रत्येन तदित्यनेनान्वयः । तां गायत्र्याख्य विद्यामाख्याहीत्यर्थः । ननु विद्यावर्मणोरेकार्थकयोः सतोः कथमर्थपार्थक्यमुच्यत इति चेन्न । तथात्वे आदौ सवाहान् रिपुसैनिकान् क्रीडन्निव विनिर्जित्येत्यस्य सत्वात् । यथाऽऽततायिनः शत्रून् येन गुप्तोऽजयन्मृधे इत्युत्तरत्रोक्त्या च पुनरु-

क्तिप्रसंगात् । ये येत्यनेनैवार्थपूर्तौ येनेत्यस्याधिक्यापाताच्च । न च प्रश्नद्वयोपगमेऽग्रे उत्तराभावादनुपपत्तिः । प्राप्तमृत्युभयस्य परीक्षितस्त-
न्निवारणोपायभूतस्य सांगस्यास्य ज्ञाने सति भगवत्संकल्पस्य स्तोत्रसामर्थ्यस्य वा वैफल्यं स्यादंगवैकल्यात्फलाभावे च सामर्थ्योच्छेदा-
सिद्धिरिति जानता रुद्ररूपेण शुकेन साक्षादनुक्तत्वेऽपि प्रकारांतरेण सूचितत्वात् । न चानेकयच्छब्दानामेकतच्छब्देनैव यस्तेस्त न
इत्यादौ निर्वाहदर्शनान्नाधिक्यमिति वाच्यं । यच्छब्दलिंगव्यत्ययसद्भावेनार्थद्वयस्यौचित्यात् । अन्यथा नारायणवर्माणि नारायणमंत्रन्यासस्य
युक्तत्वेऽपि वासुदेवादि मंत्रन्यासायोगात् । ननु भवत्पक्षेऽपि वासुदेवमंत्रन्यासोपपत्तिः कथमिति चेत् । उच्यते । ब्रह्मगायत्र्याः प्रथमचरणे
जगत्स्रष्टृर्थकसवितृ शब्दवाच्यः प्रतिपादितः । विष्णुगायत्र्याद्यपादेऽपि नरसमूहो नारं जीवजातं तदयनमाश्रय इति निर्वचनात् ।
आसीदुदारगुणवारिधिरप्रमेयो नारायणः परतमः परमात्म एक इत्याद्युक्तेश्च जगत्सर्जनयोग्यगुणविशिष्टनारायणशब्दवाच्यस्यैवोक्तेः ।
तथा द्वितीयपादे चोक्तस्य प्रकाशकार्थकदेवशब्दस्य प्रकाश्याकांक्षायां विष्णुगायत्री द्वितीयपादे वासशीलत्वेन वासु शब्दोदि-
तजीवग्रहणेन पूर्तिसहितदेवशब्दोक्तेश्च । तद्वत्तृतीयपादे चोक्तस्येंद्रियप्रेरकत्वस्यांतस्थत्वान्यथाऽनुपपत्तेरस्यास्तृतीयपादे विश प्रवेशन
इति धातोरिंद्रियप्रवेशार्थकविष्णु शब्दप्रयोगाच्च विष्णुगायत्र्याः ब्रह्मगायत्रीव्याख्यानरूपत्वं सिद्ध्यति । अतस्तत्रोक्तभगवन्नाममंत्रा-
क्षरन्यासोपपत्तिः सेत्स्यति । ननु मंत्रावयवैरेव न्यासस्यकर्तव्यता प्रायेण दृष्टा । तत्कथमेषां नारायणवर्मावयवत्वमिति चेत् । उच्यते ।
आदावुक्ताष्टाक्षरमंत्रवर्णदेवताप्रतिपादकानां हरिर्विदध्यादित्यादीनां धर्मावनायोरुकृतावतार इत्यंतानामष्टश्लोकानां उपनिबंधनात् । ततः
परं द्वादशाक्षरवासुदेवमंत्रवर्णदेवतानां मां केशव इत्यादिना दामदरोऽव्यादनुसंध्यं प्रभात इत्यंतेन प्रतिपादनात् । तंत्रसारेऽपितासामेवोक्तेः ।
ततश्च सप्ताक्षरविष्णुमंत्रवर्णाभिमानिनां चक्रगदाशंखखड्गचर्मगरुडविष्वक्सेनानां नामरूपयानायुधपार्षदभूषणसत्त्यानां वा तत्तद्गतत्वात्तत्त-
न्नामकानां भगवद्रूपाणां वा विष्णुः श्रीमानित्यादिना यावदंतेन निरूपणाच्चावयवत्वसिद्धिः संपद्यत एव । किंच गायत्र्यार्थकत्वम-
स्यानेनापि संभवति । तद्यथा । गायत्र्याद्यार्धर्चस्य शास्त्रतः षोडशाक्षरत्वेऽपि गणनया पंचदशाक्षरत्वलाभात्तावत्संख्यश्लोकानामेव वृत्त-
साम्यात् । अपरार्धर्चस्याष्टाक्षरत्वात्तावत्संख्यया ऽन्यवृत्तसाम्येन भवितव्येऽपि अंतिमवर्णस्य व्यंजनांतत्वादंतिम श्लोकस्यापि पृथग्वृत्त-
दर्शनाद्गायत्रीमूलकत्वमवसीयते । अपि च सर्वभागवतस्य वाच्यवक्तृसाम्यात्समानफलत्वेऽपि अस्यैव महाभयरक्षणशक्त्यन्यथाऽनुपपत्त्या
गायतां त्राणकर्तृत्वरूपप्रवृत्तिनिमित्तवद्गायत्रीमूलकत्वानुसंधानेन श्रावकाणां पूर्वश्लोके शत्रुजयश्रीभोगरूपफलद्वयोक्त्या तदनुसंधानाभावे तूत्त-
रश्लोके शत्रुजयरूपैकफलस्यैवोक्त्या चोक्तार्थस्य सिद्धिरवगम्यते । अतः साधकेन प्रतिश्लोकमादौ गायत्रीमंत्राक्षरबीजमुपन्यस्यैव पठने

कृते सर्वकार्यसिद्धिर्जायते इति तात्पर्यमवगंतव्यं ॥ १ ॥ इति श्रीभागवतटिप्पण्यामष्टमोध्यायः ॥ ६-८ ॥ इति श्रीभागवतटिप्पण्यां पांघरीश्रीनिवासाचार्यविरचते विरोधोद्धारे षष्ठः स्कंधः समाप्तः ॥ ६ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥





॥ हरि ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ अस्य स्कंधस्य विजयध्वजीयव्याख्याने मंगलाद्वितियपद्यचतुर्थचरणव्याख्यानं । नित्यं ( नित्यां ) नित्यानित्याभ्यस्तादितिजांघ्रितनुनख ( वर )तीर्थसुतीर्थे इति व्याख्येयं । कीदृशे मयि । नित्याभ्यस्तेत्यादि । अत्र केचित् । नित्यांनित्याभ्यस्तेति पाठमाहुः । तत्पक्षे नित्यामिति पूर्वपदांत्यांशस्तदन्वयः । नित्यं दया कुर्वंत्विति । नित्यांनित्येति पाठे । नित्यामिति दयाविशेषणं । नित्यानित्येति पाठे । नित्यं पारायणेन । अनित्यं अनध्यायादित्यागेन । शिष्येभ्यः प्रवचनादिनेति योजना द्रष्टव्या । अन्वयस्तु । अभ्यस्तेत्यत्र अदितिजः । यद्यप्यस्य पद्यस्य सप्तदशाक्षरचरणत्वात्पूर्वचरणांश एव युक्तः । तथाऽपि कथंचिदेकाक्षरन्यूनत्वेन वा एकेनाक्षरेण छंदांसि वियंतीति श्रुतेरदोषः । न भवति । न विनश्यतीति यावत् । दितिजो हिरण्यकशिपूर्येनेति नृसिंहः । तस्यांघ्रिहस्तस्थानीयौ पूर्वपादौसिंहस्य चतुष्पादत्वप्रसिद्धेरंघ्रीत्युक्तं । तस्य तनुनखानि अतिसूक्ष्माग्रत्वात्तीक्ष्णनखानि तद्वत् तीर्थादपि गंगादिसकाशादपि । अनिष्टशत्रुपापदुर्मतिविदारकत्वेन समं । सुतीर्थं वेदांतशास्त्रं तन्नित्यमभ्यस्तं येन तस्मिन्निति । यद्वा । अदितिजो वामनः । तदंघ्री तनुनखतीर्थं गंगातत्सकाशादपि सुष्ठु अतिपावनं श्रीमध्वशास्त्रं त नित्यमभ्यस्तं येनेति । अथवा । आ अदिजितः इंद्रः । तच्छब्दस्यातिशयार्थकत्वेन आ शब्देन विशेषिते महेंद्र इति सिध्यति । तथा च आदितिजः महेंद्रनामा तस्यांघ्रिः पादः । महेंद्रपूज्यपाद इत्यर्थः । तस्य तनुनखतीर्थं पादप्रक्षालनोदकं । तेन । सुतीर्थे अतिपवित्रे । मयीति । विजयध्वजतीर्थानां महेंद्रपूज्यपादशिष्यत्वादिति भावः । उत वा । अदितिजः सूर्यः । तदांघ्रितनुनखानि चरणकोमलनखानि । यस्य स व्यासः । तरुणादित्यसवर्णकचरणाब्जामलकीर्ते इत्युक्तेः । नारायणो वा । सः तीर्थं गुरुः क्षेत्रं वा । यस्य स श्रीमदाचार्यः । तस्य सुतीर्थं सच्छास्त्रं । नित्यमभ्यस्तं अदितिजांघ्रितनुनखतीर्थं येन तस्मिन् । यद्वा । न भवति नश्यतीति यावत् । दितिजो हिरण्यकशिपुः । यस्मात्सोऽदितिजः । अंघ्र्योरेव । तनूनि कोमलानि । नखानि यस्य स तथा । अरिदृष्टो

रविदारकत्वान्न करयोः। तादृशं। तीर्थं अवतारः। नृसिंहरूपो यस्य तस्य विष्णोः। किं वा। अंघ्रिवत्तनूनि कोमलानि च तानि नखानि च। न दितिजे हिरण्यकशिपुविषयेंऽघ्रितनुनखानि यस्य स तथेति वा। तादृशं। तीर्थं अवतारो नृसिंहरूपः। तस्य विष्णोः। सुतीर्थं तत्सर्वोत्तमत्वप्रतिपादिकं शास्त्रं। नरसिंहोऽखिलाज्ञानमतध्वांतदिवाकर इत्युक्तेः। नित्याभ्यस्तेति पूर्ववत्। नित्येति पाठे। अनध्यायाशुचित्ववर्जनादिरूपन्यायेनेत्यर्थः। तादृशे मयि संतो दयां कुर्वंत्वित्यन्वयः। यद्वा। अदित्यां देवमातरि। जायते आविर्भवति स तथा। तस्य वामनस्य। अंघ्रि स्वरूपं। महतां वै स्वरूपंतु पाद शब्देन भण्यत इत्युक्तेः। अंघ्रिशब्दस्य पादापरपर्यायस्य तु पादः पदंघ्रिश्चरणौ स्त्रियामिति कोशप्रसिद्धं। तत्तान्वंति विस्तारयंति। तनु विस्तार इति धातोः। योग्यस्वापकृष्टेभ्य उपदेशद्वारेत्यर्थः। तेषां रुद्रादीनां। वरः श्रेष्ठः। स चासौ सुखतीर्थश्च। सुखस्य सुखरूपस्य हरेः। तीर्थं क्षेत्रं। आवासस्थानं। तीर्थं शास्त्राध्वरे क्षेत्रोपायनारी रजःसु च। अवतारार्षिजुष्टांबुपात्रोपाध्यायमंत्रिष्विति मेदिनी। एतादृशः श्रीमदाचार्य इत्यर्थः। तस्य सु शोभनं तीर्थं शास्त्रमित्यर्थः। नित्यं सर्वदाऽभ्यस्तं अभ्यासलब्धं। अदिजिजांघ्रितनुवरसुखतीर्थ येन तस्मिन्मयि संतो दयां कुर्वंत्वित्यन्वयः॥ इति मंगलपद्यं॥ अत्रोत्तरार्धमवतारयति॥ नन्विति। वि० टी०। ननु सुरगणैः क्रियामाणस्य स्वप्रयोजनस्य संभवादवधीदिति किं नस्यादिति तत्राह॥ न हीति॥ न ह्यस्यार्थः सुरगणैरिति। पूर्वं तृतीयोक्तावसुरेभ्य इत्यत्रापि साम्यात्तृतीयया भवितव्यं पंचमी किमर्थमित्यत आह॥ विद्वेषश्चेति। वि० टी०। विद्वेषश्च तत्तत्स्वरूपद्योतनायासुरेभ्य इति पंचमीति। विद्वेषस्य। विः पक्षिपरमात्मनोरिति कोशात्। विष्णुविषयकद्वेषस्येत्यर्थः। तत्तत्स्वरूपद्योतनाय। तेषां तत्स्वरूपत्वं द्वेषस्वरूपत्वं तस्य द्योतनाय प्रकाशनाय असुरेभ्य इति पंचमीति। ननु पंचम्याः स्वरूपद्योतकत्वं क्व दृष्टमित्यतोऽत्र दृष्टांतमाह॥ वृक्षात्पर्णं पततीतिवदिति। पर्णवृक्षयोर्यथांऽगांगित्वेन तादात्म्यं पंचम्या ज्ञापितं। एवमसुरद्वेषयोरपीत्यर्थः। एवमसुरेभ्य इति पंचमीविधाने प्रयोजनमुक्त्वाऽवतारिकायामुक्तशंकोत्तरमाह॥ नन्वित्यादिना। कादाचित्काभावान्नित्यद्वेषे वधानुपपात्तिरिति। स्वरूपाभेदेन कादाचित्काभावान्नित्यद्वेषे सिद्धे वधानुपपत्तिः चेतन्यवद्वधानर्हत्वं द्वेषिणीत्यपीत्यर्थः। विपक्षे बाधकांतरमाह। अन्यथेति। अन्यथा वधस्यापि संततानुवृत्तिः स्यात्। अतो नोपपत्तिः स्यादिति भाव इति। नित्यद्वेषिणोऽपि वधयोग्यत्वांगीकारे द्वेषस्य संततत्वसिध्या वधस्यापि संततत्वप्राप्तिः स्यादिति भावप्रदर्शनं॥ २॥ व्याख्यानं। श्रीमद्भागवतमंगलरूपे जन्माद्यस्येत्यादि पद्ये मुह्यंति यं सूरय इति वाक्यप्रतिपादितार्थस्य विस्तारकोऽयं सप्तमस्कंधः। तथाहि। यमित्यनेन भगवल्लक्षितं। तत्प्रसादं विनेति शेषः। मुह्यतेरकर्मकत्वेन यमित्यस्यानन्वयात्। तया पूर्ववाक्ये आदिकवित्वेनोपदेशस्याग्राह्यत्वेऽपि स्नेहापरपर्याय-

प्रसादार्थकत्वेन हृदेत्यनेन तदर्थं ग्राह्यत्वं सूचितं । विपक्षे बाधकं वक्तुमुत्तरवाक्यप्रवृत्तिरिति संगत्यभावप्रसंगाच्च यमित्यस्यावृत्तिः कार्या । तथा च यं विना यदनुग्रहमंतरेण यं प्रति भगवंतमुद्दिश्य सूरयो मुह्यंति किं पुनश्चान्य इत्यर्थः । अतो ब्रम्हणा आदिकवित्वेऽप्यनुग्रहार्थमेवोपदेशोंऽगीकृत इति पूर्ववाक्याभिप्रायः । तत्रानुग्रहयोग्या अपि द्विविधाः । प्राप्तानुग्रहप्राप्स्यमानानुग्रहभेदात् । आद्याः शुकनारदादयः । अपरे परीक्षिद्युधिष्ठिरादयः । ज्ञानित्वंतूभयत्रापि यथा योग्यं स्थितमेव । तत्र परीक्षित्यपि ज्ञानित्वं सिद्धमेव । बुध ( अभिमन्युर्बुधस्यावतारः ) पुत्रत्वात् । गर्भे भगवत्परीक्षणात् । धर्मराजेन संस्कृतत्वात् । शुकशिष्यत्वाच्च । अत एव राज्ञः स्वस्य सूरित्वेऽपि सर्वसंशयछेदनाभावाच्छुकगुरुद्वारक भगवत्प्रसादस्यापूर्णत्वासिध्या मोहापरपर्यायसंशयप्राप्तिः । तथा श्रीनारदद्वारकस्य तदनुग्रहपूर्णत्वाद्धर्मराजस्य शंडामर्कयोः सूरित्वेऽपि भगवत्तत्त्वे मोहः । अत्र मोहस्यैव प्राधान्यप्रदर्शनापेक्षया सूरिणामपि रमाब्रह्मादीनां भगवदनुग्रहस्य पूर्णताया अनधिकारिजनमोहनसाध्यत्वज्ञानेनैव स्वस्य शंकितत्वप्रदर्शनेन लोकमोहनरूपो मोहः । इत्यादिविस्तरस्यात्र निरूपणामिति । संगतिस्तु । षष्ठे हतपुत्रादितिः । शक्रपार्ष्णिग्रहेण विष्णुनेति । लब्ध्वा तदंतरं शक्रो निद्रोपहतचेतसः । दितेः प्रविष्ट उदरं योगेशो योगमायया । चकर्त सप्तधा गर्भं वज्रेण कनकप्रभमिति चैतद्वयं संदेहबीजं । तत एव द्रष्टव्या । तेनैव जातसंशयो राजा पृच्छति ॥ सम इति । अत्र सम इत्यनेनैवालं प्रिय इत्यादीनां तु व्यर्थत्वामिति चेन्न । विवक्षांतरसद्भावात् । तथाहि । भगवति समत्वाभावप्रसंजनार्थं प्रथमं समत्वमेवानुमानेन साधयितुं तदंगानि सूचयति । अत्र सम इति साध्यं । प्रिय इति हेतुः । सुहृदिति दृष्टांतः भगवानिति पक्षः । स्वयमिति प्रसंगसमर्थनार्थं । विषम इति विपक्षः । तथा च भगवान्समः । प्रियत्वात् । सुहृत्वात् । इत्यनेन समत्वं प्रसाध्य तदभावापादनं अज्ञानेन संशयेन विपर्ययेण च करोति । तादित्थं । इंद्रार्थं दैत्यहननात्प्रत्यक्षेण वैषम्यासिद्धिः । तदेतत्प्रेय इति श्रुत्यनुकूलप्रियत्वहेतुना देवानां दानवानां च सामान्यमधिदैवतमित्यागमेन च समत्वासिद्धिः । तदुभयोरेकत्रानवस्थानलक्षणाविरोधकथनेन कथमेतदुभयं प्रामाणिकमित्यजानतः । भगवतः सर्वप्रियत्वेन समत्वं । दैत्यवधेन विषमत्वं वेति संशयात् । भगवान्यथा यथावद्विषमः । इंद्रस्यार्थे दैत्यानवधीदिति हेत्वर्थे । अतः समः प्रियः सुहृच्च कथं किंतु नेति विपर्ययात् । दैत्यवधे कारणानि निराचिकीर्षुस्त्रिद्विरुद्धैर्विशेषणैर्विशिनष्टि । तच्चेत्थं । भगवानिंद्रस्यार्थे कथं दैत्यानवधीदित्यत्रोत्तरं विषमत्वादिति चेन्न । यतः । समः कर्मानुरूपफलदानेन । न वैषम्यनैघृण्ये इत्यादिसूत्रे वैषम्यस्य निरस्तत्वात् । भोग्यत्वेन समत्वेऽपि अप्रियाः स्वभर्तारं हंत्येवेत्यत उक्तं ॥ प्रिय इति । तदेतत्प्रेय इति श्रुतेः । उपकारशीलत्वाद्धंतेत्यत उक्तं ॥ सुहृदिति उपकारीत्यर्थः । द्रव्यं कर्म च कालश्च स्वभावो

जीव एव च । यदनुग्रहतः संति न संति यदुपेक्षयेत्युक्त्या सत्त्वान्यथाऽनुपपत्तेः । भूतानामिति तु समत्वादौ सर्वत्र योज्यं । सार्थम्रा चोरवदनीश्वरत्वेन हंतृत्वं किं न स्यादित्यत उक्तं ॥ भगवानिति । ऐश्वर्यवानित्यर्थः । ऐश्वर्यस्य समग्रस्येत्यादेः । स्वस्वामिन्नमंत्रिवत्पा- रतंत्र्यनिरासार्थं हंतृत्वमस्त्वित्यत उक्तं ॥ स्वयमिति । स्वतंत्र इत्यर्थः । इंद्रस्य दुर्बलत्वदर्शनजकृपया दैत्यवध इत्यत उक्तं ॥ इंद्र- स्येति । परमैश्वर्येण प्रबलस्येत्यर्थः । इदि परमैश्वर्य इति धातो : । तस्मात्कारणाभावात्कथं दैत्यवध इति प्रश्नः । यद्वा । समः सल- क्ष्मीको भगवानिति पक्षः । प्रियत्वं साध्यं । सुहृदत्वं हेतुः । न च द्रव्यं कर्मच कालश्चेत्यनेन भगवत उपकारित्वे सिद्धेऽपि रमाया स्तदभावाद्भागासिद्धिः । अहं रुद्रेभिर्वसुभिश्चरामीत्यादि श्रुतौ भरणोक्तेः । स्वयं विषम एकः सन् विपर्ययेण समः । अलक्ष्मीक इति वा । एतत्पक्षे यथेत्युत्प्रेक्षार्थे । इंद्रस्यार्थे कथं दैत्यानवधीत्तस्मादेतदयथा विश्वासानर्हमित्यर्थः । अथवा । भगवान्भूतानामित्यस्य सुहृत् शोभनं हृदयं येन स तथा इंद्रं । तस्य इत्यर्थः । इंद्रस्येत्यावर्तनीयं । तस्यार्थे पुरुषार्थे सत्यपि स्वयं दैत्यान्यथावत्कथमवधीत् । तेनैव हंतव्या इति भावः । ननु भगवतोऽसुराद्यंतःस्थत्वात्तत्पक्षपातित्वेन सुरान्किं नावधीदित्यतोंऽतःस्थत्वं न तत्र निमित्तं किंतु प्रियत्वमेवेत्यत उक्तं ॥ प्रिय इति । एकत्र प्रियत्वेन वैषम्यं स्यादित्यत उक्तं ॥ सम इति । तं यथा यथोपासते । ये यथा मां प्रपद्यंत । इति श्रुतिस्मृतिभ्यां उपासनसदृशफलदातृत्वमेव समत्वमित्यर्थः । देवानांप्रियत्वेनोपासकत्वात् । असुराणां त्वाप्रियत्वेनोपासनात्तत्सदृशफलदातृत्वान्न वैषम्यं । तं भूतिरिति देवा उपासांचक्रिरे ते बभुवुस्तस्माद्धाप्ये तर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभुरित्यसुरास्तेह पराबभुवुरिति श्रुतेरिति भावः । ननु दैत्यानवधीदित्युक्तं । तत्र दिति पुत्रयोरेव हननात्प्रायस्तद्वंश्यानामपि वधाभावात्कथं बहुवचनमिति चेन्न । बहुवचनस्य दानवराक्ष- सादिग्राहकाद्यर्थकत्वात् । अतो न कश्चिद्विरोधः । अस्य प्रश्नस्योत्तरमप्यनेनैव संपद्यते । तदित्थं । स्वयं भगवानिंद्रस्यार्थे दैत्यानवधी दिति अयथा अनुचितमित्युक्ते उक्तप्रमाणविरोधेन समत्वादिकं कथं स्यात् । किंतु विषम एव सिध्येदित्युत्तरं । सलक्ष्मीकस्यापि हरेः सुरकार्यकारित्वेऽप्येक एव कथं दैत्यानवधीदित्यत्राप्येतदेवोत्तरं । भगवान्विषमोऽसाधारणोऽत एव समः सन् । अत्रायमाशयः। त्रिज- न्मस्वाद्यजन्मनः कृतकालिकत्वेन बलाधिक्याद्रमाभिमन्यमानाया जडरूपाया धरानाम्न्या भार्यायाः । हिरण्याक्षेण हरणे कृते पार्थक्येन तद्धंतृवराहरूपस्य वधकाले भार्यासंनिधानाभावात् । हिरण्यकशिपुवधकालेऽपि सा नोपेयाय शंकितेति सूचनेन रमासंनिकर्षाभावात् । तथा द्वितीयजन्मनस्त्रेताकालिकत्वेन पूर्वापेक्षया हीनबलत्वाद्रमारूपसीतायाः प्रतिकृतिरूपाया एव हरणकृद्रावणवधकाले एकावतार रामस्य भार्याया असंनिधानात् । तृतीयजन्मनो द्वापरकालिकत्वेन तदपेक्षया हीनबलत्वाद्रमारूपाया रुक्मिण्या हरणार्थं विवाहरूपो-

योग एव कृते तन्निमित्तेन युद्धं विनाऽपि राजसूयसभायां वधकाले रुक्मिण्या अंतःपुरस्थत्वेनासंनिधानादसमस्वे सिद्धेऽपि हिरण्यकशिपोर्वधकाले लक्ष्म्यसंनिधाननिमित्ताभावेऽपि तत्साहित्येऽयं विष्णुरिति ज्ञानसंभवेन शापप्राप्यपुनर्जन्मा प्राप्तिप्रसंगात् । नित्यावियोगिन्या अपि लक्ष्म्या बाह्यतो रहितः सन् दैत्यानवधीदित्यर्थः । तथा । अयथा प्रियः अप्रिय इत्यर्थः । प्रायेण मेयं हरिणैारसारिणावधस्मृत इत्युक्तेः । अतस्तथैवासुहृत् । असुहृदित्यर्थः । हरिष्येऽपि वरोर्जितामिति प्रतिज्ञातत्वात् । निर्दयहृदिति यावत् । अत इंद्रस्यार्थे । कथमित्याक्षेपे । नेत्यर्थः किंतु स्वयमेवावधीदिति । अनेनतृतीयप्रश्नोत्तरमपि दत्तप्रायं । अत एव साधु प्रष्ट-मित्यादि वक्ष्यति । प्रश्नोत्तरत्वादेव साधुत्वमिति भावः ॥ १ ॥ पूर्वश्लोके निर्गुणत्वांगीकारेण भगवतोभयविद्वेषाभावः समर्थितः । अत्र तु नारायणगुणान्प्रति संशय इत्युच्यते । न हि निराधिष्ठानः संशयो भवति । अतोऽर्थांतरं ॥ नारायणगुणान्प्रति । कर्तृत्वादिगुण-विषये ॥ जातस्तंभवान् । जातेन गुणत्वजात्या स्तंभः स्तंभनं स्थैर्यं तद्वान् ॥ संशयोऽस्ति । भगवति गुणत्वजातिमद्गुणानामभावो वा केषांचिदभावो वेति संशये आद्यकोटेरन्यथा ज्ञानिभ्यः सकाशाच्छ्रुतत्वेन । द्वितीयकोटेः स्वतःसिद्धत्वेन स्थैर्यासिद्धिरिति भावः । स त्वद्वाक्येन करणेन ॥ छेत्तुं । छेदविषयी कर्तुमर्हति । सुमहानिति । तु न इत्यस्य विशेषणमपि । शोभनो मह उत्सवः श्रवणोत्कंठा येषां तान् इत्यर्थः । यद्वा । नारायणगुणानां विशेषणं महोत्सवानित्यर्थः । अथवा । नारायणगुणानिति न इत्यस्य विशेषणं । नाराय-णाद्गुणाः श्रवणेच्छादयो येषां तानिति विग्रहः ॥ ३ ॥ निर्गुणोपीति । श्लोकोपरि प्रवृत्तं तात्पर्यवाक्यं । बाध्यादिस्थ इति । तत्र बाध्य-तादिगतेत्यत्र आदिगतेत्यसंगतमेव । अनन्वयात् । अतस्तद्दीपिकायां तु हे बाध्यतादिगतेति संबुध्यत इति लिखितं । तथा सति हरेरिति परोक्षकर्ता गीयत इति प्रथमपुरुषोऽसंगत इति केचिद्वदंति । तादृश लेखनाशयस्तु नैव ज्ञायते हि । अन्येतु । आद्यद्वितीय चरण-योरेकार्थसद्भावाद्विरुक्तिं कथयंति । अपरे तु । गतेत्यत्र छंदोभंगभयादनुस्वारलोप इति च भाषंते । तथाप्युक्ताद्विरुक्तिपरिहारो न दृश्यते अतोऽस्यार्थो लिख्यते । बाध्यादिस्थो हरिर्नित्यमित्यनेन हरेर्बाध्यबाधकस्थत्वमुक्तं । सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येषवत् । बाध्यताऽपि हारिस्थितेति वक्तुं बाध्यतादिगतेत्यपीति । बाध्यता । आदिगता आदौ पुरुषे हरौ गता विद्यमाना इतीत्यपि गीयते । तथापि सा हरेर्बाध्यत्वान्न । किंतु । तु शब्दस्तु विशेषे स्यात्स्वसिद्धांतेऽवधारणे इति शब्दनिर्णयात् बाध्यशब्द प्रवृ-त्तिनिमित्तविशेषान्न साधारणबाध्यशब्दप्रवृत्तिनिमित्तरूपबाधार्हत्वात् । विशेषास्त्वित्थं बोध्यः । बाधार्हो बाध्यो जीवः सोऽस्यास्तीति बाध्यः । अर्श आद्यच् अधीनजीव इत्यर्थः गोमानित्यादिषु दृष्टत्वात् बाधार्हजीवनियंतृत्वेन बाध्यादिस्थत्वरूपप्रवृत्तिनिमित्तलक्षणविशे-

षेण बाध्यता गीयते इति भावः । यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयत इति भाष्यस्थस्कांदोक्तेः । यद्वा । अदभक्षण इति धातोः । तयोरन्यः पिप्पलं स्वाद्वत्तीति श्रुतेश्च । आदिनो जीवाः तद्गता बाध्यता बाधार्हता गीयते । हरेः सर्वशब्दवाच्यत्वात् । सर्वविशेषेण तु शब्दवाच्ये हरौ न । तत्र हेतुः । नित्यादोष्युतत्वत इति ॥ ६ ॥ अत्र कालं सृजतरित्युक्ते कालस्यानादिनित्यत्वेन विरोधोऽत उच्यते । यदा सिसृक्षुरिति पूर्वश्लोकस्थेन यद्रा पदेन सिसृक्षायाः कालाधीनत्वं सूचितं । स्वतंत्रस्य तन्नोपपद्यत इत्यत इदं पद्यं । हे ॥ नरदेव । राजन् ॥ ईशो । रमानाथः । न केवलं कालमेव सृजति किंतु प्रधानपुंभ्यां सह सहितं ॥ चरंतं । अतीतानागतवर्तमानरूपेण प्रवर्ततं कालं । एवं त्रीनपि सृजतीत्यर्थः । न चानादिनित्यत्वेन त्रयाणामपि सर्जनं दुर्घटमिति शंक्यं । जीवानां देहसंयोगः प्रादुर्भावो हरेर्जनिः । विकारता जडानां च जनिरित्युच्यते सदेत्युक्त्या तेषामनादित्वेऽप्युक्तरीत्या जनिसंभवात् । तत्र कालस्य सृष्टिकालादिनामविशेषरूपविकारार्पणमेव सर्जनं । सृष्ट्याद्यभावे सृष्टिकालादिनाम्नामप्यसंभवात्तत्सृष्ट्यादिकं भगवादश्रितं । अत आश्रय इत्युक्तं । तत्रापि हेतुरीश इति । ननु सृष्ट्यादेरेव मिथ्यात्वेन तदाश्रयस्याप्यनुपपत्त्या तद्धेतुकृतेशत्वस्याप्यनुपपत्तेरित्यत उक्तं ॥ सत्यकृदिति । सत्यस्यैव सृष्ट्यादेः कर्तेत्यर्थः । किंचारोपितस्यैवमिथ्यात्वं । आरोपस्त्वेकत्र सत्यत्वेनैव । स्थितस्यैवान्यत्र संभवति । नान्यथा । तस्मात्सृष्ट्यादेः सत्यत्वं क्वांगीकृतं । यत्र क्वचिद्दृष्टांतस्यैव सत्यत्वासिध्या सर्वोक्तोपपत्तिः यदि कुत्रापि नास्तीति वदसि तदा आरोपासिध्या मिथ्यात्वासंभवेन सत्यत्वस्यैव सिध्या युक्तमुक्तं । अनेन कालादिनिदर्शनेन यावत्सृज्यं तावत्सर्वं सत्यमेव सिध्यति । नेदं कालादि किंचित्यस्योत्तराभावेन बाधासंभवात् । अत्र कालस्य प्रधानपुंभ्यां साहित्यकथनेन तत्सृष्टौ तत्कालस्य सृष्टिकालत्वं सेत्स्यति । न केवलं कालसृष्टिकथनेन । आत्माश्रयत्वप्रसंगात् । अतः प्रधानपुंभ्यामित्युक्तं । अनेन तत्तत्संज्ञार्पणरूपकालसृष्टिकथनेनाधीनकालो विष्णुर्यदा देवादीन्भजते तदा सत्त्वाद्युत्कर्षकालविषये प्रवर्तत इति भावः । किंच स कालादिस्रष्टा तत्र तत्र सत्त्वाद्युत्कर्षकाले प्रवृत्तः सन्निति शेषः ॥ उभयसिद्धं । देवदैत्यानामुत्कर्षानुत्कर्षकत्वमाप्नुयात् । चो हेत्वर्थे । यतः ॥ लिंगात्मनः । देवदैत्यलिंगांतःस्थस्य ॥ लिंगगुणाः । लिंगस्य स्वाभाविकदेवदैत्यत्वचिन्हस्य बाध्यबाधकत्वादयो गुणाश्च । संति । अतो न सत्त्वविरोधः ॥ ११ ॥ शपतोरिति । अत्र विविशतुरिति लिट्द्विवचनेन विद्यमानदंतवक्रमृत्यूक्त्या प्राप्तविरोधनिरासार्थमर्थः । यत् ॥ अव्ययं । नाशादिसर्वदोषरहितं ॥ परं । गुणपूर्णं । ब्रह्म तं विष्णुमसकृच्छपतोश्चेदिपकारूषयोर्जिव्हायां ॥ श्वितः । कुष्टः । न जातः । तौ ॥ अंधं । न पुनरुत्थानं । तमश्च न विविशतुः । भूतार्थकलिटा पूर्वमेवोभयोस्तमः प्राप्त्या भवितव्यं । तथाऽप्यद्यपर्यंतं नासीदिति भावः

सूचितः । यद्वा । यद्ब्रह्मपरमित्येकं पदं । यांति गच्छंति जानंति वेति यांति तानि च तानि ब्रह्माणि च जीवा इत्यर्थः । ब्रह्माणि जीवाः सर्वेपीत्युक्तेः । तेभ्यः । परं भिन्नं । अव्ययं व्येति विकारं प्राप्नोतीति व्ययं जडं तद्विलक्षणमव्ययं विष्णुं समानशपनकर्मणोर्मध्ये एकस्य चैद्यस्य भगवत्प्राप्तिदर्शनेन तत्साहश्यादन्यस्यापि सा भविष्यतीति भाविन्याऽपि प्राप्तेर्निश्चयेन भूतार्थकलिटा न विविशतुरि-त्युक्तिः । छत्रिन्यायाद्वा । ननु नात्र विरोधः ॥ शिशुपालमृतेः प्रागेव दंतवक्रमृत्यंगीकारात् । न च भागवतेऽनंतरकथनेन विरोधः । पूर्वाः कथाः परं ब्रुयुः परां पूर्वं तथैव चेति शब्दनिर्णयवचनेन पूर्वापरव्यत्ययसंभवादिति चेन्न । पूर्वश्लोकस्थसंप्रतिशब्दस्य संगत्यनुप-पत्तेः । तत्र हि दमघोषसुतः कलभाषणादारभ्य पापः निंदनादिना पापवान् । अशे आद्यच् । आसीदिति शेषः । दुर्मर्दंतवक्रश्च ॥ संप्रति । अधुना । गोविंदे अमर्षी आस्त इत्यन्वयः । न च संप्रतिशब्दः शिशुपालेऽन्वेति । मृतत्वात् । अथवा । विष्णुमसकृच्छपतोश्चे-दिकारूपयोर्जिह्वायां श्वित्रो न जातस्तथा ब्रह्मशब्दलक्षितवाचं प्रति तमो ग्लानिः । तमुग्लानाविति धातोः । परं तयोश्चेतनं प्रति । अंधं अंधयतीत्यंध अज्ञान लक्षणं कश्मलं । एते द्वे । यत् किं । यच्छब्दस्य किमर्थकत्वात् । न विविशतुः । शपतोर्जिह्वायां कुष्टः वाचि ग्लानिः चैतन्येऽज्ञानं च किं न जातमित्यर्थः । किंवा स्वयमेव शंकिते श्वित्राभावब्रह्मप्राप्ती संभावयति । यद्यस्मात् शपतः सन-कादीन्प्रति दमघोषकरूषजौ । अंधंतमः गाढं कोपं न विविशतुः न प्रापुः । तस्माज्जिव्हायां न श्वित्रो जातः । अव्ययं अपुनरावृत्तिं । परं ब्रह्माख्यं । विष्णुं । विविशतुश्चेति । संभावयामीति शेषः । रसकृदिति अपृथग्विष्णुविशेषणं । रस शब्द इति धातोः । त्रिभिर्लो-काय कल्पतामिति सनकाद्युक्तकर्तारमित्यर्थः ॥ २० ॥ अनयैव प्रनाड्योत्तरश्लोकस्थं ईयतुरिति पदं च व्याख्येयं । तथा चायं श्लोकार्थः ॥ ॥ कथं तास्मिन्निति । पूर्वश्लोके यद्यतोऽधमज्ञानं तमोग्लापको मधुनामा दैत्यश्चैतौ विविशतुः । अतो विष्णुं शपतोश्चैद्यकारूषयोर्जि ह्वायां । यद्यतश्च । अव्ययं स्वाभाविकं परं ब्रह्मासकृन्निरंतरमस्ति । अतश्च । अनजातः अजा अविद्या तद्विरुद्धा अनजा विद्या तयेति । तृतीयार्थे तसिः । श्वित्रः कुष्ठो नासीदित्यर्थविवक्षामाशंक्याह ॥ कथमिति ॥ तास्मिन् । विषयेऽपि । एको जयः । भगवति लय-मियाय । अन्यो मधुः ॥ दुरवग्राह्यधामनि । दुःखस्वरूपेन ग्राह्ये धामनि । स्थानरूपेंऽधे तमसीत्यर्थः । लयमियायेति । एतावज्ञानदैत्यौ तस्मिन्जयांशे शिशुपाले ॥ अंजसा । साकल्येन ॥ कथं । कस्मान्निमित्तात् ॥ लयं । प्रवेशं । ईयतुः । यद्वा । तस्मिन्जयांशे ॥ पश्यतां । जानतामपि । सर्वलोकानां ॥ दुरवग्राह्यधामनि । दुर्ज्ञेयस्वरूपे । भगवति स्थिते सति । अज्ञानदैत्यौ अंजसा कथं केन कारणेन लयं नाशं ईयतुः । उक्तं च तात्पर्ये । मधुकैटभौ भक्त्यभावाद्धतौ भगवता मृतौ । तम एव क्रमादासौ भक्त्या चैद्यो हरिं ययाविति ।

पूर्वोक्तं वा द्विवचनसाधनं ॥ २१ ॥ यथेति । अस्वबुद्धिनिश्चयेन येन तन्मयतायां भक्तियोगापेक्षया वैरानुबंधस्य महासाधनत्वोक्तिः । तानहं द्विषतः क्रूरानित्यारभ्य ततो यांत्यधमां गतिमित्यंतेन विरुध्येतात उच्यते । ॥ मर्त्यः । मर्त्याधमः ॥ वैरानुबंधेन । वैरस्मरणेन । तन्मयतां । तत्र मनसोऽभिनिवेशं । आग्रहमिति यावत् । ॥ यथेयात् । प्राप्नुयात् । तथा भक्तियोगेन नेयात् । इति मे मतिर्निश्चिताऽनुभवोऽत्र प्रमाणं । अनेन मनस एकाग्रीकरणे वैरानुबंधस्य महत्त्वं सूचितं । मागधाद्या यथा नित्यं द्वेषादाग्रहिणो हरौ । न तथाग्रहिणो भक्त्या ऋते ब्रह्माणमव्ययमित्युक्तेः । न तु तत्प्राप्तौ । वरतोऽपि न मुच्यंते द्वेषिणः शापतोऽपि तु । भक्ता नैव निपात्यंते इत्युक्तेः । एतदर्थमेव पूर्वश्लोके युज्यादिति न विधिकथनं । किंतु य इति कर्त्रध्याहारेण प्रवृत्तिमुक्त्वा सा इति कर्त्रध्याहारेण पृथगनीक्षणरूपं फलमुच्यते ॥ २८ ॥ उत्तरश्लोकेऽपि दृष्टांतप्रदर्शने संरंभभयेनेत्युक्तं ॥ संरंभः । दुःखदस्य प्रतिदुःखदानाय मनसो विकारः । पुनर्मां न दंशेदिति भयं । अयं मे क्षुन्निवर्तकत्वेन पोषक इति स्नेहयोगः । प्रीतिः स्नेहस्तथा योगः प्रेमाबंध इतीयत इति शब्दनिर्णयोक्तेः । एतेषु त्रिषु पूर्वयोर्द्वयोरपगमे केवलस्नेहेनैव समानरूपताप्राप्तिः । स्नेहादन्नं ददातीति स्वाकर्षणभयेऽपिच । विद्यमानेऽप्यल्पकोपे संगतिः स्नेहतस्तथा । पेशस्कृद्रूपता कीटो यथा याति तथैव तु चैद्यादयोऽसुरावेशाद्धरौ द्वेषयुता अपि । निजस्वभावया भक्त्या नीता हरिसरूपतामिति वचनात् । न तु तदैक्यं । भृंगरूपप्राप्तात् श्यामनामककृमेः सकाशात्पूर्वभृंगस्य भिन्नत्वदर्शनात् । अत एव तदुत्तरश्लोके वैरेण धूतपाप्मानस्तमापुरनुचिंतयेत्युक्तं । वैरयुक्तयाऽप्यनुचिंतया भक्तिपूर्वकस्मृत्या । अनुचिंतितेति तामाहुर्भक्तिपूर्वा तु या स्मृतिरित्युक्तेस्तात्पर्ये । धूतपाप्मानः संतस्तं कृष्णमापुरिति हि तदर्थः । अतो वैरादिना मुक्त्यभावात् न तानहामित्यादि गीतावाक्येन विरोधः ॥ २९ ॥ कतम इति । पूर्वत्र षण्णां मुक्तियोगानामुक्तौ सत्यामत्र पंचानामित्युक्त्या विरोधोऽत उच्यते । तस्माद्वैरानुबंधेन निर्वैरेण भयेन वा । स्नेहात्कामेन वा युंजात्कथंचिन्नेक्षते पृथक् । कामात्स्नेहाद्भयाद्द्वेषाद्यथा भक्त्येश्वरे मनः । आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः । गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबंद्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो । इत्युक्तत्विषु पूर्वोभयोः संबंधस्यैककुलायत्तत्वात्सर्वत्रासंभवेनानुक्तेः । तद्व्यतिरिक्तानां पंचानां मध्ये । यद्वा । मुख्यस्यानिर्विशेषेण शब्दोऽन्येषां विशेषत इति स्कांदोक्तेः । अस्मदादिविहितनिर्विशेषितभक्तेर्मुख्यत्वात्तदभावेऽपि गोप्याद्याचरितानां कामादिविशेषयुक्तभक्तियोगानां पंचानां मध्ये । पुरुषं कृष्णमुद्दिश्य कतमोऽपि कश्चनापि विशेषेण भक्तियोगो नास्त्यतो विजैस्तमासि पातित इति युक्तमिति भावः । तस्माद्वेनकृतनिंदायुक्तस्वभक्तियुक्तस्याश्रवणात्केनापि उक्तेष्वेकतमेनापि । यद्वा । क शब्दः कुत्सने इत्युक्तेः उक्तेष्वधमेनापि उभयभूतेन भक्तियोगेन कृष्णे

मनो निवेशयेदित्यविरोधः । केचित्पुरुषे पुरुषस्य कामासंभवात्पुरुषे वेने कामस्यानुपपत्त्या पंचानां भयादीनां मध्ये इत्याहुः । तच्चिंत्यं । पुत्रा अग्नेः पूर्वमासंश्च तेऽथ स्त्रीत्वप्राप्त्यै चक्रुरुग्रं तपश्च । भार्यात्वार्थे वासुदेवस्य योषित्तनुं तासामिच्छतीनां समीर इति तात्पर्यनिर्णयोक्तेः । पुरुषाणामग्नीनां कृष्णे कामसंभूत्या तपसा कृष्णभार्यात्वप्राप्तेर्दर्शनात् ॥ ३३ ॥ देहेति । अस्य प्रश्नस्याग्रे उत्तराभावादूग्रंथन्यूनतेति नाशंक्यं । द्वाःस्थौ तान्प्रत्यषेधतामित्यत्राग्रे उत्तरसंभवात् । तथाहि । वैकुंठेऽधिकारस्था मुक्ताश्चेति द्विविधा जनाः संति । तत्र द्वाःस्थावित्यनेन जयविजययोरधिकारस्थत्वं सूच्यते । अधिकारस्थितानां तु देहादियोग्यत्वेन वरशापयोग्यत्वं । एवं मुक्तानामप्ययोग्यत्वं । तदुक्तं । अधिकारास्थिताश्चैव विमुक्ताश्च द्विविधा जनाः । विष्णुलोकस्थितास्तेषां वरशापादियोगिनः । अधिकारस्थिता मुक्तिं नियतं प्राप्नुवंति च । विमुक्त्यनंतरं तेषां वरशापादयो न तु । देहेंद्रियादियुक्ताश्च पूर्वं पश्चान्न तैर्युताः । अप्यभिमानिभिस्तेषां देवैः स्वात्मोत्तमैर्युता इति तात्पर्ये । तस्माद्वैकुंठे मुक्तामुक्तस्थानद्वयसंभवादमुक्तस्थाने जयविजयोर्देहादियोगित्वेन स्थित्या शापसंभव इति द्वाःस्थपदेन प्रश्नपरिहारसूचनान्न ग्रंथन्यूनतेति ज्ञेयं ॥ ३६ ॥ अशपन्नित्यत्र रजस्तमोभ्यां रहिते इत्यनेन जयविजययोर्मुक्तस्थानस्थितत्वप्रतीत्या नैवमिति चेन्न । रजस्तमसोरुभयोरेव राहित्यकथनात्तृतीयसत्त्वात्मकसिध्या गुणयोगेन तत्स्थितिस्थलस्य मुक्तस्थानत्वाभावात् । न हि मुक्तस्थानस्य गुणसंबंधः । सगुणान्समतीत्यैतान्ब्रह्मभूयाय कल्पत इत्युक्तेः ॥ ३९ ॥ पापिष्ठामिति ॥ आसुरीं । सुरविरोधिनोऽसुरा भगवद्द्वेषिणस्तेषामियमासुरी तां योनिं । युवां ॥ यातं । अधमगतिं गच्छंतमित्यर्थः । आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिमित्युक्तेः । न तु दैत्ययोनिमित्यर्थः । येन रक्षः क्षत्रिययोन्योः प्राप्त्योक्तिविरोधःस्यात् । शापस्यैकविध्ये जातिभेदे किं कारणमिति चेत् । यं यं वाऽपि स्मरन्भावं त्यजत्यंते कलेवरं । तं तमेवैति कौंतेय सदा तद्भावभावित इत्युक्तेः । हिरण्यकशिपुजन्मनि ब्रह्मासृष्टाद्भुतं नृसिंहरूपं दृष्ट्वाऽयं पंचानना आननः कश्चन यातुधानो महांतीति भावनयाऽग्रे दशाननो रावणः पुण्यजन आस । तत्र मृतिकाले स्वहंतारं धनुर्धरं रामं दृष्ट्वा मद्धंताऽयं कश्चन क्षत्रिय इति भावनया अग्रे शिशुपालः क्षत्रिय आस । तत्रापि मृतावयं चक्रधरः साक्षाद्वैकुंठपतिरित्यनुसंधानेन वैकुंठद्वारपालत्वं प्रापेति न कश्चन विरोधः । तदस्य प्रियमभिपाथो अश्यां नरो यत्रेति श्रुतौ केवलाभ्युपसर्गस्याभिषिक्तामित्यर्थवत् आङुपसर्गस्यापि आध्रियमाणार्थकत्वमंगीकार्यं । तथा च आध्रियमाणा असूर्यः । अस्य वाराहरामकृष्णरूपस्य विष्णोः सुरमण्यः धरासीतारुक्मिण्यो यस्यां तां योनिमिति वा ॥ कृपालुभिः कृपापूर्णकलशैरित्यर्थः । आलुजुपपदीभूतदयादिगणे कृपाशब्दस्य पाठान्नात्रालुच् विधानं । किंतु आलु शब्दस्य

कलशवाचकत्वमेव । कृपालवः पंकजनाभतीर्था इत्यस्य व्याख्याने कोशेऽपि द्रष्टव्यः ॥ ४० ॥ अज्ञात इति । अत्र यं हिरण्याक्षमसूत साग्रत इत्युक्तेर्विरोध इत्यतोऽर्थांतरं । समानलोप इति सूत्रेण तत इत्यत्र तत इत्युपमेयं । ससस्तु प्रथमेति सूत्रेण तत इति प्रथमा पंचम्यर्थे वा । ततात् पितृतो हिरण्यकशिपोर्ज्येष्ठत्वं । एतद्विवक्षयैवोक्तिरिति न विरोध इति वेदितव्यं ॥ ४१ ॥ हत इति । अत्र पूर्वं हिरण्यकशिपुमृत्यूक्त्या । भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना । हिरण्यकशिपू राजन्पर्यतप्यंद्रुषा शुचेत्यनेन विरोधः । तथा हिरण्याक्षो धरोद्धारे वराहेण हत इति चोक्तं । एतदपि दुर्घटं । तद्वधांते । उद्धृत्य विस्तृतायां धरायां स्वायंभुवकन्याप्रसूतिजायां हिरण्याक्षजन्मश्रवणाद्विरोधांतरं चेत् । उच्यते । पूर्वं हिरण्याक्षवधेऽप्यत्र हिरण्यकशिपोः पूर्वं मृत्युक्तिस्तु ज्येष्ठादिक्रममपेक्ष्य ज्ञेया । हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्तत इति पूर्वमुक्तेः । न तु कालिकक्रममपेक्ष्य । अथवा । शिशुपालस्य प्रकृतत्वात्तदाभिन्नचेतनात्वेन हिरण्यकशिपोः प्रस्तावार्हत्वादादौ तद्वधोक्तिस्तस्मान्न विरोधः । तथैवान्योऽपि न । स यथा । हिरण्याक्षावेव द्वौ । ब्रह्मजः कश्यपजश्चेति । तत्र ब्रह्मप्रलयोदकमग्नधरोद्धारे तस्यादिदैत्योक्त्या ब्रह्मजत्वसिद्धेः । ब्रह्मण आदिसृष्टिदिने आदिवाराहेण दंष्ट्रया तस्य हतत्वात्तदुत्तरमेव दक्षकन्यादित्यात्मजे द्वितीये हिरण्याक्षे ब्रह्मजादि हिरण्याक्षाविष्टे सति ब्रह्मदैनंदिनलयाब्धौ कश्यपजहिरण्याक्षमज्जित धरोद्धारे पुनर्दशावतारगतवाराहेण तस्यैव कर्णताडनेन हतत्वात् । तदुक्तं । ब्रह्मजस्तु हिरण्याक्षः प्रथमं दंष्ट्रया हतः । स एव पार्षदाविष्टो द्वितीयं कर्णताडनात् । पूर्वं लयोदके मग्नां द्वितीयं तेन मज्जितां । भुवमुद्धरता चासौ हरिणा क्रोडमूर्तिनेति ब्रह्मांडे । न च दैत्यनामानुपपत्तिः । तथाहि । अदिति शब्दो अद् भक्षण धातोरत्तरि प्रसिद्धः । तथा दोऽवखंडनधातोर्दित्याख्यसंहारावसानकाले जातत्वात् । दैप् शोधन इति धातोः स्वमूलशोधकत्वाद्दितिर्ब्रह्मा तत्पुत्राद्वा । ननु वाराहादिवाराहयोः को विशेष इति चेत् । नराकृतिवराहाननत्वं द्वितीये । केवलवराहरूपत्वमाद्ये । विपरीतं किं न स्यादिति चेन्न । करेण करणमूलेऽहन्निति वचनेन द्वितीयस्य करादिसद्भावात् । आद्यस्य तं दंष्ट्रयाऽद्रिमिव वज्रधरो ददारेत्युक्त्या कराभावसिद्धेश्च । अस्तु तथा । तथाऽप्यादिदैत्यवधकाले दत्वा स्तनाचासृक्प्रसुवे इत्यादिवचसां का गतिरिति चेत् । तत्रापि कश्यपजदैत्यस्यैव प्रवृत्तत्वात् । कुत एतदुपलभ्यत इति चेत् । करेणैव वधदर्शनात् । तत्रादिदैत्येत्युक्तेः कथं योजनेति चेत् । दितेः प्रथमापत्यत्वात् । तथाऽपि ततः प्रसूत्यादेरनंतरत्वकथनेन विरोध इति चेत् । व्यत्यासेनापि चोच्यत न विवेकेन कुत्रचित् । दुष्टानां मोहनार्थाय तत्र तत्र कथाः क्वचित् । इति स्कांदोक्त्या निर्वाहः कर्तव्यः । इमावेव श्वेतवाराहवाराहाख्यौ ब्रह्मकश्यपजहंतारौ क्रमात् । अतोऽत्र न कश्चिच्छंकावकाशः ॥ ४२ ॥ तावद्येति । तावद्य क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव । अत्र

राजसूयाग्रपूजायामेकस्मिन् शिशुपाले हते निर्मुक्ताविस्यादिद्विवचनप्रयोगोऽसाधुरिति ततोऽर्थांतरं ॥ तौ । रावणकुंभकर्णौ ॥ अद्य । अस्मिंस्तृतीये जन्मनि । हे युधिष्ठिर तव ॥ मातृष्वस्रोः । श्रुतदेवाश्रुतवसोः आत्मजौ । सुतौ । अत एव क्षत्रियौ । चैद्यकारूषौ जातौ। नात्र द्विवचनानुपपत्तिः । उभयोरपि जातत्वात् ॥ अधुना । सांप्रतमग्रपूजाकाले । शापस्य ॥ निर्मुक्तौ । निर्मुक्तिविषये ॥ कृष्णचक्रहतांहसौ । कृष्णस्य चक्रे सुदर्शनगदे ताभ्यां हतं विनष्टं अंहः शापरूपं पापं ययोस्तौ । ननु चक्रशब्देन गदा कथमुच्यत इति चेत् । शिशुपालस्य चक्रेण दंतवक्रस्य गदया हतत्वोक्तेः । न चाश्रुतकल्पनेयं । जुगोप कुक्षिंगत आत्तचक्र इत्यत्र चक्रशब्दस्य चक्रदीप्ताविति धातोर्दीप्तगदया भ्रामणेनालातचक्राकारेण चक्रवद्दर्शनात् । अन्यथा परीक्षिदुक्तेरपि विरुद्धत्वापातात् । गर्भे परिभ्रमंतीमुल्काभां भ्रामयंतं गदां मुहुरित्यादि दृष्टत्वोक्तेः । तस्माद्यक्तमुक्तं । तथा दंतवक्रमृत्यभावसिद्धद्विवचनानुपपत्तिः कथं परिहृतेति चेत् । छत्रिणो यांतीतिवदजहल्लक्षणयाऽहतस्यापि दंतवक्रस्याछत्रिणोऽपि छत्रित्ववद्धतव्यपदेशात्ज्ञेया । यद्वा । अधुनाऽग्रपूजायामेकः कृष्णचक्रहतांहा जातः । शापनिर्मुक्तौ शापप्राप्तदेहविसर्जनेऽन्यः कृष्णगदाहतांहाः स्यात् । एवं विवेकेनोभौ कृष्णचक्रहतांहसौ वेदितव्यौ ॥ ४७ ॥ विद्वेष इति ॥ अच्युतात्मनि । अच्युतो विष्णुरात्मनि स्वस्मिन्यस्य तस्मिन्हिरण्यकशिपावधिकरणे । प्रवेक्ष्येऽहं परागदृश इति वामनोक्तेः ॥ विद्वेषः । विः पक्षिः परमात्मनोरित्यभिधानात् । वेः विष्णोर्द्वेषः । कथमासीदित्येकः प्रश्नः तस्योत्तरं । भ्रातर्येवं विनिहत इत्यादिना ज्ञेयं ॥ महात्मनि । श्रीनारदशिष्यत्वात्पूज्यबुद्धौ ॥ दयिते । परमपुत्रत्वात्प्रिये ॥ पुत्रे । पुन्नाम्नोनरकात् त्रातृत्वाद्युपकारिणि च प्रल्हादविषये । विशेषेण द्वेषः कथमासीदिति द्वेषस्य स्वरूपविषयो द्वितीयः प्रश्नः । तदुत्तरं । वध्यतामाश्वयं वध्य इत्यादिना । विद्वेष आसीदिति निमित्तविषयस्तृतीयप्रश्नः । तदुत्तरं । तत्साधुमन्ये इत्यादिना । अपि शब्दः प्रश्नसमुच्चये । विष्णुद्वेषनिमित्तं प्रल्हादद्वेषस्वरूपं तद्द्वेषनिमित्तं च मे ब्रूहीत्यन्वयः ॥ ४९ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ७–१ ॥ ॥

॥ हरिः ॐ ॥ आह चेति । अष्टपादात्मकेऽस्मिन् श्लोके आहाब्रवीदित्येताभ्यां न पुनरुक्तिः शंक्या । तयोर्भिन्नार्थकत्वात् अव्यवधानेनाग्रे भो भो दानवदैतेया इत्युक्तिसद्भावेन तानभिमुखीकर्तुमाहेत्यनेन संबोधयतीत्यर्थोपगमात् । आभाष्याहाशरीरवागितिवत् अध्वर्युः पुष्टिं करोति संयतीत्यादौ लटो विध्यर्थकत्वेन ल्यबंतार्थकत्वात्संबोध्याब्रवीदित्यर्थः । अब्रवीदित्यस्य तु पुरतः शृणुतानंतरं सर्वैरित्यादिः सत्त्वादनन्वितं । इदं रुषेत्यंगीकारात् । अस्य विष्णो रुषेत्यर्थः । यद्वा । इयं चासौ रुट् चेति तया प्रकृतरोषेणेत्यर्थः । अथवा पृथक् पदं । इदं बंधुमुद्दिश्येति शेषः । किंवा । इ विचिले स्मरे पुमानिति यादवकोशात् । आश्चर्यप्रदमित्यर्थकं क्रियाविशेषणमिदं

संबोधनस्याश्चर्यप्रदत्वं तु नमुचे पाक इल्वलेत्यत्र संध्यभावात् । इदं विश्वं कोपोज्वलाभ्यां निरीक्ष्यन्निति वा । तत्पक्षे करालदंष्ट्रोग्रदृष्ट्या धूम्रमंबरं कुर्वन्निति शेषः । निरीक्ष्यन्निति वा । अत एव दुष्प्रेक्ष्यभ्रुकुटीमुख इति योजनाद्रष्टव्या ॥ २ ॥ रुदंत्य इति । अत्रांघ्रिपंकज-मित्यस्य सोत्संगस्थमिति विशेषणमध्याहार्यं । अन्यथा तस्य दूरस्थत्वे प्रव्हीभूतानां योषितां कुचकुंकुमारुणत्वमश्रूणां न स्यात् । प्रव्ही-भूतत्वाभावेंऽघ्रिपंकजेऽस्रपतनासंभवात् । नात्र रुदंत्यो विलेपिर इत्येताभ्यामर्थतः पुनरुक्तिः । उभयोर्भिन्नार्थकत्वात् । तत्राद्यस्यावर्णत्वे सति दुःखजन्यशब्दोच्चारणार्थकत्वं । द्वितियस्य वियोगखेदगुणवर्णनयुक्त दुःखजन्यशब्दोच्चारणार्थकत्वमिति ॥ आक्रंदनया । रो-दनस्वरविशेषापरपर्यायेणाक्रोशेनेत्यर्थः ॥ ३२ ॥ इति दैत्यंति । दितिर्वाक्यश्रवणपुत्रशोकत्यागांते सस्नुषा सती ॥ तत्त्वे । विष्णौ । स्वतंत्रमस्वतंत्रं च द्विविधं तत्त्वमिष्यते । स्वतंत्रो भगवान्विष्णुरित्युक्तेः । उभयोर्मध्ये स्वातंत्र्यस्यैव प्राधान्येन ग्राह्यत्वात् । चित्तमधारय-दित्यन्वयः । आदावेव स्नुषात्वांगीकारे कर्तरि स्नुषाप्रवेशाद्यावक्रियाणामुभयनिष्ठत्वप्राप्त्या पुत्र पदस्यायोगः । यद्वा । पुत्रशोकत्यागः के-वलं दितिपरः । श्रवणधारणे उभयनिष्ठे इति योगविभागः । अथवा । समाने लोप इति सूत्रेण ससस्नुषा इति स्थिते स्नानेच्छासहिते-त्यर्थः । किंवा । पुत्रशः पुत्रस्य दैत्यपतेर्वाक्यमाकर्ण्य अकं दुःखं क्षणात्त्यक्त्वा तत्त्वे तद्भावे ज्येष्ठपुत्रास्तिक्ये तद्धर्मे वा तदभिप्राये वा चित्तमधारयदिति ॥ ६१ ॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥ ७-२ ॥

॥ हरिः ॐ ॥ अन्यथेति । अत्र परमेष्ठीनिजासनमिति प्रकृतत्वादन्यैरित्यनेन पदानि गृह्यंते । कल्पांते वैष्णवादिभिरित्ये-ताभ्यां विष्णुपदानां कल्पांतत्वं प्रतीयते । विष्णुपदस्य तु । न यत्र माया न रजस्तमश्च । न यत्र कालः प्रभवेदित्यादिना नित्य-त्वमुक्तं । अतो विरोधस्तस्मादुच्यते । विष्णोरपत्यं भक्तो वा ब्रह्मा । ब्रह्मा स्वयंभूर्द्रुहिणो वैष्णवः शतधृत्तथेति शब्दनिर्णयोक्तेः । स आदिः कर्ता येषां तैर्ब्रह्मनिर्मितैरित्यर्थः । तेषामेव कल्पांतत्वं न विष्णुपदस्येति न विरोधः । अहं ॥ इदं । दृश्ये विश्वं ॥ ओजसा । तपःसामर्थ्येन ॥ अन्यथा । अन्यप्रकारकं ॥ अयथा पूर्वं । ब्रह्मकृताविलक्षणं ॥ विधास्ये । उत्पादयिष्यामि । इदमुत्पादनं पारमे-ष्ठ्यपदप्राप्तावेव घटेत नान्यपदलाभेन । तस्मात्तदेव साधयिष्ये इति भावः । एतत्पदस्थ एतत्किं न कुरुषे इत्यत आह ॥ किमिति । वैष्णवादिभिर्ब्रह्मनिर्मितैः ॥ कल्पांतैः । ब्रह्मदिनपर्यंतस्थायिभिः । अत एव ॥ कालनिर्धूतैः । अनित्यैः ॥ अन्यैः । इंद्रादिपदैः । किं फलं । न तत्रस्थेनेदमुत्पादनं सुशकमित्यर्थः ॥ १२ ॥ इति श्रीभागवतटिप्पण्यां तृतीयोऽध्यायः ॥ ७-३ ॥ ॥

॥ हरिः ॐ ॥ जगुरिति । अत्र नारदोक्त्याऽस्मच्छब्दगृहीतेस्तस्य च प्रल्हादोपदेशेन दैत्यस्यानिष्टकामत्वप्रतीतेः ।

अस्मदादयो जगुरित्यनेन विरोध इति चेन्न । अस्मदादय इत्यत्रातद्गुणसंविज्ञानबहुव्रीहेरंगीकारात् । येषामादिर्नारदस्ते जगुः । न तु नारदः । न हि नारदस्य नारद एवादिर्भवति । अतो न विरोधः ॥ १४ ॥ एवामिति । अत्र कालस्य महत्त्वं न संगच्छते । सौहृदं दुस्त्यजं पित्रोरत्यजत्पंचहायन इत्युक्त्या पंचवर्षात्मककालस्योपलब्धेः । न च शापजन्मप्रभृतिकः काल इति वाच्यं । ऐश्वर्यमत्तस्येत्यादिविशेषणायोगात् । ऐश्वर्यस्य शापोत्तरसंभवात् । नापि वरानंतरमपि बहुकालेन प्रल्हादजन्मांगीकारो युक्तः । तपसः पूर्वमेव तज्जन्मोक्तेः । निरंबु धारयेत्प्राणान् को वै दिव्यसमाः शतमिति ब्रह्मोक्त्या बहुकालपत्यां सत्यामपि अंतर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतय इत्युक्तेः । स्वभर्तुर्गृहागमनपर्यंतं इंद्रादिभयशंकायाः सत्त्वेन गर्भधारणोत्तरं तु गर्भधारणे कारणाभावात्तज्जन्मोपगमे तत एव प्रल्हादे पंचहायने सिद्धे महाकालातिक्रमणमनुचितं । अत्रोच्यते । कालस्य महत्त्वं नाम मनुष्यमानेनाष्टादशशतवर्षात्मकत्वं । न च पंचहायनत्वोक्तिविरोधः । हिरण्यकशिपोर्महेंद्रसदनस्थत्वाद्देवमानेन पंचवर्षाणामेवोपपत्तेः । यद्वा । महा उद्धव उत्सव इत्यभिधानात् । बहुवचनस्य त्रित्वेपर्यवसानाच्च । तस्य कालः महान् । एतादृद्वितीयाबहुवचनं । प्रल्हादस्य जातकर्मनामकर्माक्षरविधिरूपांस्त्रीनुत्सवानित्यर्थः ॥ व्यतीयाय । अत्यक्रामत् ॥ २० ॥ मा भैष्टेति । अत्र विबुधश्रेष्ठा इति बहुवचनसंबुध्या व इत्यनेन चरितार्थे सर्वेषामिति व्यर्थमिति न शंक्यं । प्रयोजनसद्भावात् तथाहि । पूर्वत्र सर्वे लोकाः सपालकाः इत्यादिना सपालकसर्वलोकशरणागत्युक्त्या विबुधश्रेष्ठा इत्यनेन पालकमात्रग्रहणेऽपि लोकग्रहणासंभवात् । सर्वेषामित्यनेन तद्ग्रहणोपपत्तिः । ननु मद्दर्शनमित्ययुक्तं । पूर्वत्र तेषामाविरभूद्वाणी ह्यरूपा मेघनिःस्वनेत्युक्त्याऽरूपस्य दर्शनायोगात् । मैवं । यतो मम दर्शनं येन तदुपस्थानमित्यर्थः । उपतस्थुर्हृषीकेशमित्युक्तेः । ध्यानं वा । ध्यानेनात्मानि पश्यंतीत्युक्तेः । नात्रासन् प्रत्ययांतस्य श्रेयः शब्दस्य अदंतत्वेन विरोधः । पिंडदद्याद्गयाशिरे इत्यादौ दृष्टत्वात् । यद्वा । मद्दर्शनपदस्य विशेषणं सर्वश्रेय इति । सर्वं श्रेयो यस्मादिति विग्रहः ॥ अपपत्तये । नास्त्यन्यः पः पालको यस्य स पः अहं तस्य मम पतिः प्राप्तिस्तस्यै हि । सर्वश्रेयस्करं मद्ध्यानं ॥ भूतानां । देहिनां । मत्प्राप्तये भवतीत्यर्थः । अतो न कश्चिच्छुद्रशंकावकाशः ॥ २६ ॥ गुणैरिति । अत्र यस्य नैसर्गिकी रतिरित्यस्य । अनादिद्वेषिणो दैत्या विष्णौ द्वेषो विवर्धितः । तमस्यंधे पातयति दैत्यानंते विनिश्चयादिति परमश्रुतिवाक्येन विरोध इत्यत उच्यते । ॥ यस्य । नरस्य । भगवति वासुदेवे ॥ नैसर्गिकी । स्वाभाविकी । एकवचनेनैका ॥ रतिः । भक्तिः । तयेति शेषः । तस्य नरस्य ॥ महात्म्यं । महात्मानः पूज्यचेतना देवा इति यावत् । तेषामिदं महात्म्यं देवत्वं सूच्यते । तर्हि दैत्यकुलोद्भवादिकं कथं तत्र युज्यत इत्यत आह ॥ गुणैरिति ॥ असंख्येयैः । सम्यक्-

ख्यातुं योग्याः संख्येयाः सुष्टुवर्णनीया इत्यर्थः । तद्विरुद्धा असंख्येया अवर्णनीया इति यावत् । तैर्गुणैः गौणवृत्तिनिमित्तभूतैर्दैत्यकुलोद्भवादिदोषैः । बहुवचनाद्बहुभिरपि । ॥ अलं । तद्वर्णनेऽलंभाव एव युक्त इति भावः । ॥ तस्य । प्रल्हादस्य । रहितासुरोऽसुर इत्युक्तेः । दैत्यकुलजत्वं शापजं । स्वाभाविकं तु देवत्वमेव । देवाः शापाभिभूतत्वात्प्रल्हादाद्या बभूविरे इति भाष्योक्तेश्च ॥ ३७ ॥
इति श्रीभागवते चतुर्थोऽध्यायः ॥ ७–४ ॥ ॥

॥ हरिः ॐ ॥ गृहमिति । अत्र दैत्ययाजका इति बहुवचनस्य । पौरोहित्याय भगवन्वृतः काव्यः किलासुरैः । शंडामर्कौ सुतौ तस्येत्यादिना द्विवचनसद्भावाद्विरोध इति चेन्न । बहुवचनस्याद्यर्थकत्वात् । शंडामर्कादयः शालास्था इत्यर्थः । निहत्य धार्तराष्ट्रान्न इत्यत्राद्यर्थकत्वोपलंभात् । न च तत्र केवलधृतराष्ट्रपुत्रार्थकत्वं । आचार्याः पितरः पुत्रा इत्यादिना सर्वसंबंधिनां प्रकृतत्वात् ॥ ८ ॥ भण्यतामिति । अष्टमश्लोके दैत्ययाजका इत्यत्राद्यर्थकत्वेन विरोधपरिहारेऽपि गुरूणामित्यत्र विरोध एव । सर्वशालास्थानां गुरुत्वाभावादिति चेन्न । गुरूणामित्यत्रापि गुर्वादीनामित्यर्थांगीकारात् । गुरावात्मनि च बहुवचनमित्युक्त्या सोपपत्तिकत्वात् ॥ १० ॥ एतावदिति । अस्तु पूर्वोक्तबहुवचनविरोधपरिहारः । अत्रोक्तम्य कुपितः सुदीन इत्याद्येकवचनस्य का गतिरिति चेत् । उच्यते ॥ एता । इण् गताविति धातोर्गत्यर्थानां ज्ञानार्थकत्वात् । ज्ञाता प्रल्हादः ॥ अवब्राह्मणाय । जानते ब्राह्मणाय । अत्र गत्यादाविति धातोः । इत्युक्त्वा । अनेनाविद्वद्ब्राह्मणस्य संभाषणीयत्वमपि नास्तीति सूचितं । अत एव पूर्वं यथा भ्राम्यत्ययोर्ब्रह्मन्नित्यत्र ब्रह्मन्नित्येकवचनप्रयोगः । बहुभिः पृष्टेऽप्येकस्मा एवोत्तरं दत्तमिति भावः ॥ विरराम । तूष्णीं स्थितोऽभूत् । अत्र विररामेत्यस्यावृत्तिः कार्या ॥ महामतिः । उभयोर्मध्ये यो ज्ञानवान् एकः स विरराम । अथान्यो राजसेवकत्वात्सुदीनः सन् तं प्रल्हादं निर्भर्त्स्य कुपितोऽभूदिति योजना ॥ १५ ॥ धर्मा इति । अत्र केवलधर्मोपदेशप्रार्थनायां सत्यां धर्ममर्थं कामं चेति त्रयाणामुपदेशाद्विरोध इति न शंक्यं । धर्मा इति बहुवचनस्याद्यर्थकत्वात् । तेन धर्मादय इति स्थिते धर्मार्थकामा इत्यर्थः । अतो न विरोध इति भावः ॥ ५१ ॥ धर्ममिति श्लोकद्वयं । उपशिक्षितं तच्छिक्षामित्येताभ्यां पुनरुक्तिनाशंकया । शंडामर्कौ गुरुभिः गुरावात्मनि बहुवचनमित्यतः शुक्राचार्येणेत्यर्थः । आत्मने प्रातिस्विकत्वेन स्वस्मै इत्यर्थ द्योतनायैव सांधिव्यत्ययः । व्यत्ययोऽतिशयकुत्सनाभेदेष्विति सूत्रात् ॥ यथा त्रिवर्गं ॥ आद्यपुरुषार्थत्रयं यथा । उपशिक्षितं तथा ॥ आनुपूर्वशः । पूर्वमनुसृत्य स्थितं । नीत्यादिधर्मस्य । पितृप्राप्यत्वात् । स्तन्याद्यर्थस्य मातृप्राप्यत्वात् । रत्यादिकामस्य दारप्राप्यत्वात् । तत्तत्कारणकं धर्मं अर्थं कामं च प्रल्हादाय नितरामूचतुः । अन्यथा-

लेभ्यः किंचिदनेन ज्ञायते । तत्र हेतुगर्भविशेषणं प्रश्रयेति । ॥ प्रश्रयेण । भगवन्निष्ठया नम्रायेत्यर्थः । प्रल्हाद इति कर्ताऽध्याहार्यः ॥ द्वंद्वारामोपवर्णितां । द्वंद्वेषु रागद्वेषादिषु । आरामः रत्यातिशयः । तदर्थमुपवर्णितां तच्छिक्षितां यो गुर्वोरध्यापितं साधु सम्यक् न जाने इत्यर्थसंभवान्नानेकविरोधदर्शनं ॥ ५२ ॥ ५३ ॥ इति श्रीभागवतटिप्पण्या पंचमोध्यायः ॥ ७–५ ॥

॥ हरि ॐ ॥ पुंस इति । अत्र हि शब्दः पूर्णायुश्चोदित्यर्थे ॥ पुंसः । पुरुषस्य । मनुष्यस्येति यावत् । आयुर्वर्षशतं स्यात् । शतायुर्वै पुरुष इति श्रुतेः । अन्यथा तावत्परिमितं न स्यादित्यर्थसूचकश्च शब्दः। प्रायेणाल्पायुषो मर्त्याः कलावस्मिन्युगे जना इत्युक्तः । अजितात्मन इत्यस्यावृत्त्यर्थे वा । तथा च । अजिते हरौ । आत्मा मनो यस्य । तस्य पुंसो वर्षशतं । आयुर्हि । आयुर्हरति वै पुंसा-मुद्यन्नस्तं च यन्नसौ । तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तयेत्युक्तेः ॥ अजितात्मनः । अवशीकृतमनसः ॥ तदर्धं । शतार्धं ॥ निष्फलं । व्यर्थं । भवति । व्यर्थं भस्त्रेव निश्वसन्नित्युक्तेः । तत्र हेतुर्यदिति ॥ यत् । यस्मात् । अजितात्मा ॥ रात्र्यां । दिनसमान-कालिक्यां । अजितेन मनसा । कर्त्रा । ॥ अंधं तमः । गाढमज्ञानं । प्रापितः सन् ॥ शेते । स्वपिति । आत्मैव रिपुरात्मन इत्युक्तेः ॥ ११ ॥ एवमर्धायुषो व्यर्थत्वमुक्त्वा दिनकालिकस्याप्यर्धस्य वैयर्थ्यं दर्शयति ॥ मुग्धस्येति । अत्रायं विशेषः । शतवर्षमितायुषि एता अवस्थाः । चातुर्वर्ण्यं मया सृष्टमिति गीताभाष्ये सात्विको ब्राह्मणः । सात्विकराजसः क्षत्रियः । राजसतामसो वैश्यः । तामसः शूद्र इति विभाग इत्युक्तिवत् । तथा शुद्धसात्विकादिभेदेन जीवविभागोक्तिवच्च । बाल्यकौमार कौमारतारुण्य तारुण्यवार्धिक्य वार्धि-क्यभेदात् षट् । तत्र बाल्यकौमारयोर्ग्रहणेन मुग्धस्य क्रीडतश्चेत्युभयग्रहणेनायमर्थः ॥ मुग्धस्य । अज्ञानस्य बालस्येत्यर्थः । बाल्ये दशवर्षाणि गच्छंति । दशवर्षमितं बाल्यं । तत्र ज्ञानाभावान्निष्फलत्वमायुष इति भावः । वैद्यशार्ङ्गधरेणापि दशवर्षांते बाल्यनाश इत्युक्तं । तदूर्ध्वं ॥ क्रीडतः । गुरुसेवाविद्याभ्यासादिकं विसृज्य निलायनसेतुबंधादिकौमार क्रीडाभिर्विहरतः । दशवर्षाण्यपयांति । एवं विंशतिर्यातीत्यायुषो निष्फलत्वमिति भावः । अत्राप्ययं विशेषः । अष्टवर्षं ब्राह्मणमुपनयीतेति श्रुतेरष्टमे वर्षे उपनयनं । ततो द्वादशवर्षं गुरुसेवया विद्यासंपादनार्थं ब्रह्मचर्यं । एवं विंशतिवर्षाणि विहितं त्यक्त्वा य एवं विहारैः कौमारैरित्यादिनोक्तनिलायनादिक्रीडाभिर्नयंति तेषां विंशतिर्निष्फला स्यादिति अथ तारुण्यस्य वक्तव्येऽपि बाल्यकौमारसमकालत्वान्मंडूकप्लुतिन्यायेन वार्धक्यमेवादौ वदति ॥ जरयेति । अत्रापि षष्ठीद्वयग्रहणेनायं विशेषः सूच्यते । सोऽयं । वार्धक्यमपि द्वेधा । शक्तियुक्तं तद्रहितं चेति । तत्र ॥ जरया ग्रस्तदेहस्य । किंचिच्छक्तियुक्तस्य । जर-येति पृथक् पदात्तदावृत्तिः सूच्यते । जरया लक्षणया जरान्यविषादेन दशवर्षाणि निष्फलानि यांति ॥ अकल्पस्य । अशक्तस्य ।

अशक्त्या दर्शवर्षाणि वृथा यांति । एवं विंशतिर्निष्फला याति । अत एवाशीतिर्न हि पूर्यंत इत्यनेनोपवासाद्यनर्हत्वमुक्तं ॥ १२ ॥ अथ शिष्टस्य तारुण्यकालस्य निष्फलत्वं ब्रवीति ॥ दूरापूरेणेति । अत्रापि तारुण्यं त्रेधा । कौमारमिश्रं । केवलतारुण्यं । वार्धक्यमिश्रं चेति । गृहेषुसक्तस्येत्येकं पदं । अत्रापि विशेषः । गृहिणी गृहमुच्यत इत्युक्तेः । इष इच्छायामिति धातोश्च । गृहं स्त्रियं इषति इच्छति स गृहेषुः स चासौ सक्तश्चेति कर्मधारयः तत्र दारेच्छादेः ॥ दूरापूरेण कामेन । कामस्य दुष्पूरत्वात्तद्विषयकयत्नेन दाराणां ऋतुप्रतीक्षादिना तारुण्यस्याद्यविंशतिर्याति । तथा ॥ सक्तस्य । द्वारसंगयुक्तस्य । ॥ मोहेन । सामान्यतो देशकालाभिज्ञत्वेन । द्वितीया विंशतिर्याति ॥ प्रमत्तस्य । स्त्रीपुत्रादिलालनपोषणादिना नष्टावधानस्य । बलीयसा । च शब्दानुकृष्ट मोहेन तृतीया विंशतिर्याति । एवं शेषं षष्ठिवर्षात्मकमायुरपयाति । शार्ङ्गधरेणापि दशमासात्मकसप्ततिवर्षांते शुक्रनाश इत्युक्तं । तादृशसप्ति-वर्षाणां द्वादशमासात्मकानि चतुर्मासोत्तराष्टपंचाशद्वर्षाणि भवंति । तदंते शुक्रनाशो नाम शुद्धतारुण्यनाशः । अष्टमासोत्तरैकवर्षस्याल्पत्वा-न्न गणनायामूनतेत्येकवाक्यतया संवादो द्रष्टव्यः । तस्मात्सर्वायुषि भगवद्धर्माचरणेऽनवकाशात्कौमार आचरेत्प्राज्ञो धर्मान् भागवतानिहेति युक्तं । यस्य तद्ब्रह्मसांसिद्धं पूर्वं तेनाप्यतेऽग्रतः । मध्ये वयसि चेत्सिद्धं मुक्तौ मध्यं प्रपश्यति । तेजोमंडलमेवान्यदंगं विष्णोः प्रपश्यति । पूर्वे वयसि बोद्धव्यमामुखात्सर्वदृष्टये इति तैत्तारीयभाष्योक्तेः । यद्वा । तृतीयं भागमायुष इति भागवतैकादशस्कंधे वानप्रस्थधर्मप्रस्तावोक्त्या चतुराश्रमाणामायुषश्चत्वारो भाग इति गम्यते । तत्राद्यपंचविंशत्यब्दात्मकबाल्यवयसि ब्रह्मचर्यं ॥ द्विती-यतावदात्मक बाल्यतारुण्यवयसि गार्हस्थ्यं । तृतीयतावदात्मक तारुण्यवार्धक्ये वयसि वनवासित्वं । तावच्चतुर्थे वयसि संन्यासः । तत्राशक्तत्वात्स एवातुरसंन्यास इत्युच्यते । एवं बाल्यादिनिर्णयः ॥ १३ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ७–६ ॥ ॥ ॥

॥ हरिः ॐ ॥ तदैवेति । अत्र येन ब्रह्मांडकटाहमस्फुटदित्युक्तं । ब्रह्मांडकटाहभेदे बाह्योदकगमनप्रसंगः स्यात् । तथा ब्रह्मा-दिभिः स्वधामाप्ययमानने प्रत्यहं दशावतारदर्शनात्तदसंभवेन च विरोधद्वयप्राप्तिरित्यत उच्यते । अस्फुटदित्यस्य प्रत्यगर्जदित्यर्थः । नाभिद्यतेत्यर्थः । आस्फोट्य गाढाशनौ व्यपतदित्यत्र स्फोटशब्दस्य शब्दार्थकेन दृष्टत्वात् । अन्यथा तत्र भेदार्थकत्वेऽनुपयोगात् । तथैवाजादय इत्यत्र समासस्यातद्गुणसंविज्ञानबहुव्रीहित्वांगीकारात् । ब्रह्मेतरैः स्वधामाप्ययमाननेऽपि ब्रह्माज्ञानासंभवाच्च न विरोधद्वय-मिति ॥ १६ ॥ सत्यंविधातुमिति ॥ निजभृत्यभाषितं । निजेन स्वेन । भृत्युविषये । भाषितं उक्तं । न मे भक्तः प्रणश्यतीति ।

अथवा । निजभृत्यो ब्रह्मा तद्भाषितं । तथाऽपि वितराम्यंग वरान्यदपि दुर्लभानिति । अस्यार्थः । न पः पालको विष्णुर्यस्मिंस्तन्मतं अपं तद्यद्यस्यास्तीति अपी हिरण्यकशिपुः । यस्त्वया मंदभाग्योक्तो मदन्यो जगदीश्वर इति तदुक्तेः । तस्य तव दुर्लभो प्राप्यो यो अः विष्णुः याति प्राप्नोतीति यन् लभ्यः अपि दुर्लभाः येषु तान्वरान्वितरामीति । अन्यथा । ततो मे दुर्लभाः पुंसो यान्वृणीषे वरान्ममेति पूर्वार्धोक्त्या पुनरुक्तिप्रसंगः । यद्वा । स्त्रीपुंमलाभियोगात्मदेहो विष्णुर्नजायते । किंतु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुं । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरेति । निजस्य स्वस्य भृत्यः शिष्यत्वेन सेवकत्वेन पुत्रत्वेन च पोष्यो मुख्यप्राणतृतीयावतारस्तस्य भाषितं विष्णुतत्त्वनिर्णयगतब्रह्मांडानुवादिवाक्यं । अपि वा । निजः स्वभक्तः सुखतीर्थस्तस्य भृत्यो जयतीर्थाख्यः शिष्यस्तेन भाषितं । शुद्धानंदोरुसंविद्युतिबलबहलौदार्यवीर्यादिदेवामिति । उत वा । निर्निश्चयनिषेधयोरित्यभिधानात् । निजोऽपौरुषेयो भृत्यः । असुरशूद्राद्यशब्दादिभ्यो रक्ष्यो वेदः परमोपानिषद्रूपस्तद्भाषितं । गुणसर्वस्वमूर्तिमानिति । किंवा । हतोऽयमसुरोऽल्पकः । तत्सुतं पाह्यनुस्मृतामिति नित्यभृत्यरुद्रभाषितं इत्थमेव रुद्रस्य कल्पकल्पाविर्भूतप्रार्थनृसिंहस्तोत्रत्वान्न पौर्वापर्यशंकावकाशः । निजः स्वभक्तरक्षणरूपो धर्मस्तस्य भृतिः पालनं तद्विषये । अकारो वासुदेवः स्यादित्युक्तेः । अशब्दवाच्येन कृष्णेन भाषितं । यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृज्याम्यहमिति वा । अहो स्वित् । निजभृत्याः सनकादयस्तद्भाषितं । त्रिभिर्लोकाय कल्पतामिति । यद्वा । निजभृत्यभाषितं । इंद्राय नारदोक्तं । त्वया न प्राप्स्यते संस्थामनंतानुचरो बलीति । अथवा । निजभृत्येन जयांशेन हिरण्यकशिपुनाप्रल्हादायोक्तं । गोपायेत हरिस्त्वाऽद्येति । अपिवा । स रक्षिता रक्षति यो हि गर्भे इति निजभृत्यमभाषितं । उत वा । हरिः सर्वभूतेषु भगवानास्त ईश्वर इति दैत्यबालेभ्यो निजभृत्यप्रल्हादभाषितं । किंवा । निजेन स्वेन भृत्येभ्यो देवेभ्यो भाषितं । प्रल्हादाय यदा द्रुह्येद्धानिष्येऽपि वरोर्जितामिति । निजेन स्वेन भृत्याभ्यां जयविजयाभ्यां भाषितं । प्रत्येष्यतं निकाशं मे कालेनाल्पीयसा पुनरिति । तत्सर्वं वाक्यजातं ॥ सत्यं । यथार्थं ॥ विधातुं । कर्तुं ॥ आत्मनः । स्वस्य ॥ अखिलेषु भूतेषु । स्थावरजंगमात्मकेषु ॥ व्याप्तिं स्थिततां च । सत्यां विधातुं ॥ न मृगं । केवलमृगाकाररहितं ॥ न मानुषं । केवलनराकाररहितं । अत एवात्यद्भुतरूपं उद्वहन्सन् ॥ सभायां । सुधर्माख्यायां ॥ स्तंभे । यूपे ॥ अदृश्यत । दृष्टिगोचरोऽभूत् । यद्वा । निजानां ब्रह्मपैलादीनां भृतिः पोषणं यस्मात्स निजभृतिः स चासौ अः व्यासः । अ आ अं अः पुराणर्षिर्व्यासः शाखासहस्रकादिति गीताभाष्यटीकोक्तेः । तेन भाषितं कथितं । सत्यं पूर्णानंदज्ञानात्मकं । सच्छब्द उत्तमं ब्रूयादानंदंतीति वै वदेत् । येति ज्ञाने समुद्दिष्टं

पूर्णानंद दृशिस्तत इति दशमतात्पर्योक्तेः । विधातुं त्वक्चर्ममांसरुधिरमेदोमज्जास्थिधातव इत्युक्तत्वगादिरहितं । निश्चेतनात्मकशरीरगुणैश्च हीन इत्युक्तेः । अखिलेषु भूतेषु भूम्यादिषु सत्सु । जडावरणे सतीति यावत् । व्याप्तिं विगता आप्तिः प्राप्तिर्यस्य तं । अप्राप्यमित्यर्थः । न मृगं श्वापदभिन्नं । न मानुषं । नरभिन्नं । तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षड्विधा मता इत्युक्तेः । नञस्य भेदार्थकत्वात् । अत एव अत्यद्भुतं आश्चर्यं । रूपं आकारो यस्य तं देहं । उद्वहन् धारयन् सभ्यायां । सप्तमीवशात्स्थिते इति शेषः । स्तंभेऽदृश्यतेति । अथवा । निजभृत्याय अर्जुनाय । भाषितं । असक्तं सर्वभृच्चैवेति । तत्सत्यं । विधातुं कर्तुं । आत्मनः स्वस्य । भूतेष्वखिलेष्वित्येकं पदं । भूतानि इषति इच्छतीति भूतेषुः ब्रह्मा तत्सृष्टाखिलेषु । मध्यमपदलोपी समासोऽयं भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्माभूदिति याचितवररक्षणार्थं ब्रह्मसृष्टसर्वभूतेष्वित्यर्थः । व्याप्तिं आप्तिं च सत्यं विधातुं स्तंभे स्तंभस्थाने । अन्। दृश्यत अद्भुतरूपमदृश्यतया । अत्यद्भुतं महाश्चर्यं । एकं रूपं न मृगं न मानुषं उभयाकारमन्यच्च रूपं उद्वहन्सन् विष्णुर्भायात् बभासे । लकार व्यत्ययोऽत्रार्षः । अनेन स्तंभभेदे सभापतनं कथं नासीदिति शंकाऽपि निरस्ता । अथवा । निजास्वरूपभूता भृतिर्भरणशक्तिर्यस्याः सा अंभृणी रूपा श्रीः । तया अभाषितं अनुक्तं । मनसा संकल्पितामिति यावत् । आय विष्णवे उक्तं वा । शापं । सत्यं सत् अवसानं समाप्तिमित्यर्थः । षद्लृ विशरणगत्यवसादनेष्विति धातोः । तत् याति प्राप्नोतीति तथा विधं । विधातुं समाप्तिगं कर्तुमित्यर्थः । अखिलेषु त्रिष्वपि जन्मसु अधिकरणेषु भूतेषु । आद्यर्थे बहुवचनं । भूतक्षत्रियचक्रपाणिरूपेषु । आत्मनः स्वस्य । व्याप्त विविधत्वेनाप्तिं सत्यां विधातुं । इत्यनुकर्षणार्थश्चः । सत् साधुभावं । जयत्वामिति यावत । सद्भावे साधुभावे च सदित्येतत्प्रयुज्यत इत्युक्तेः । तत् यापयतीति जयप्रापिकामित्यर्थः । विधातुं कर्तुं । उक्तं हि तात्पर्ये । हिरण्यकशिपुभूतममन्यत मृतौ हरिं । अतो भयानको जातस्तत्र राजानमेव च । मत्वा राजैव संजातः कृष्णं चक्रादिलक्षणैः । मृतिकाले हरिं चैव मत्वा भक्त्येव केवलं । द्वाःस्थत्वं हरिमाविश्य प्रापैव मनुजोऽपि त्विति । स्तंभे उन्मत्तायां सभायां भया ज्ञानेन सहितां भक्तिं याति जानातीति तथा सन् । गत्यर्थानां ज्ञानार्थकत्वात् । अमृगं न मृगं वा । मृग मार्ग अन्वेषण इति धातोः । अन्वेषणीयमित्यर्थः । न मानुषं नृविलक्षणं न मृगं न मानुषं सिंहसदृशं चेत्यर्थो वा । सिंधुं ननावेत्यत्र नावेव सिंधुमिति संवादेन नकारस्य सदृशार्थकत्वात् । मृगाणां च मृगेंद्रोऽहं । नराणां च नराधिपमित्युक्तिभ्यां । मुख्यामुख्ययोर्मुख्यस्यैव ग्राह्यत्वात् । अनेन सिंहाकारानुक्तिः परास्ता । तदाकारमपि रूपं । अत्यद्भुतरूपमुत् । रूपं ज्ञानं उत् आनंदः । अत्यद्भुते रूपमुदौ यस्मिंस्तत् । वहन् गृह्णन् । यद्वा । वह प्रापण इति धातोः । अत्य-

द्भुतरूपमुदौ प्रापयन् । सुखस्यैव शोध्यत्वेन मृगाकारस्य सुखप्रापकत्वात् । मनुज्ञान इति धातोः । मानुषाकारस्य ज्ञानप्रापकत्वात् । अदृश्यत दृष्टोऽभूत् ॥ १८ ॥ सुरानका इति । अत्र गंधर्वाप्सरसां गाननृत्ययोः क्रमात्सहजधर्मत्वेपि विपर्ययेण कथनात् । अग्निना सिंचति वारिणा दहतीतिवद्विरोध इति न शंक्यं । स्त्रीणां भीरुस्वभावत्वादिति भयानक श्रीनृसिंहदर्शनेऽशक्तत्वेन पुंगधर्वैर्व्यवधानकृते व्यवहितनृत्यस्य दर्शनायोगात्स्वाभाविकमपि तद्विहाय व्यवहितस्यापि गानशब्दस्य श्रवणार्हत्वात् । ता दूरतो जगुरेव । साधारण गंधर्वाणां नैसर्गिकगानगुणत्वेऽपि मुख्यशब्देन नृत्यगानरूपगुणद्वयवैशारद्यसिध्या ताभिर्गाने कृते नृत्योपचारसमर्पणाभावो मा भूदिति स्वयं ननृतुरित्यभिप्रायसद्भावात् । यद्वा । गंधर्वा मुख्याः प्रधाना यासु ताःस्त्रियो ननृतुर्जुगुश्च । उभयोः कर्त्रोर्मध्ये द्वयोरपि क्रिययोः सत्वात् । ताभ्यामपि कृतं ॥ ३७ ॥ मनव इति । अत्राप्सरसः शब्दस्य सांतत्वाभावेऽपि न विरोधः । व्यत्ययोऽतिशयकुत्सनाभेदेष्विति सूत्रेणोभयेषां समगुणद्वयत्वेनाभेदसिध्यै असुन् प्रत्ययांताभावरूपव्यत्ययस्य सार्थकत्वात् । अथवा । अत्राप्सरः शब्दसत्त्वेऽपि उत्तरत्राप्सरः कृतस्तोत्राभावरूपवैलक्षण्यद्योतनार्थं प्रत्ययवैलक्षण्यं । उभयोर्गुणयोरप्युभयनिष्ठत्वेन गंधर्वाणां मुख्यत्वकथनेन चाग्रे गंधर्वा ऊचुरित्यत्र गंधर्वा इति बहुवचनस्याद्यर्थकत्वांगीकारेण गंधर्वाप्सरसामुभयेषामपि सिध्यैकस्यैव स्तोत्रस्योभयकृतत्वज्ञापनार्थं वा सकारांतत्वलोपो ज्ञेयः ॥ ३९ ॥ इति श्रीभागवताट्टिप्पण्यामष्टमोऽध्यायः ॥ ७—८ ॥

॥ हरि ॐ ॥ साक्षादिति । अत्रादृष्टाश्रुतपूर्वत्वेन शंकया भगवत्समीपे न गमनमयुक्तं । ब्रह्मणःप्रतिकल्पे श्रीनृसिंहावतारसंभवेन नित्यावियोगिन्या तया बहुशो दृष्टत्वेन शंकाऽनुद्भावात् । अत उच्यते ॥ देवैः । आद्यर्थे बहुवचनात् । देवादिजनैः ॥ अदृष्टाश्रुतपूर्वत्वात् । पूर्वमदृष्टं पूर्वमश्रुतं चेत्यदृष्टाश्रुतपूर्वं तस्य भावस्तत्त्वं तस्माद्धेतोः । महदित्यस्य गर्भविशेषणत्वेन महत्वाच्चेत्यर्थः । कांच्यार्कमतीत्य तस्थतुरित्यनेन महच्छरीरस्यात्यंतवरोर्जितस्यापि हिरण्यकस्यात्यल्पीकरणाय केवल नखैर्हंतुं स्वोत्संगे धृतत्वादितिभावः । तद्धेतुद्वयेनाद्भुतं तन्नारसिंहरूपं ॥ साक्षात् । प्रत्यक्षं । दृष्ट्वा प्रेषिता प्रशमितुं प्रार्थिता सती श्रीःशंकितेति । लुप्तोत्प्रेक्षं । शंकितेव नोपेयाय । न तु शंकिता । कृष्णस्य रामरूपत्वे रुक्मिण्या अपि सीतारूपत्वदर्शनेन भगवतो नृसिंहरूपत्वे श्रियोऽपि तद्रूपत्वसिद्धेः । तस्माद्देवादिभिरेव नृसिंहरूपमदृष्टाश्रुतपूर्वं न श्रियेति । अदृष्टाश्रुतपूर्वत्वादन्यैः साधारणैर्जनैः । नृसिंहं शंकितेव श्रीर्लोकमोहाय नोययाविति तात्पर्योक्तेः । साधारणैस्तानि धर्माणि प्रथमान्यासन्निति श्रुतेः । आधारणैः सर्वलोकधारकैर्देवैः सहितैर्जनैरित्यर्थः ॥ २ ॥ प्रल्हादामिति । अत्र ब्रह्मणोऽपि तादृग्रूपस्य बहुशोदृष्टत्वाद्भगवत्कोपोपशमार्थं प्रल्हादप्रेषणं सूचितभीतप्रतीत्या विरोध इत्यत उच्यते ॥ अवस्थितं । वा



गतिगंधनयोरिति धातोः । अः विष्णुः वीयते प्राप्यते अनेनेति अवः प्रसादः । यस्य प्रसादात्परमार्तिरूपादस्मात्संसारान्मुच्यते नापरेणेति श्रुतेः तस्य प्रसाददस्य । स्थितं स्थितिर्यस्मिंस्तं प्रल्हादं ॥ अंतिके । अंतो निर्णयोऽयं प्रल्हाद एव प्रसादकाल इति निर्णयः । अवसानं वा । प्रल्हादाद्यवरभक्तानां रमाब्रह्माद्यजस्रप्रसन्नभगवत्प्रसादस्य कादाचित्कत्वेनानित्यत्वात् । सोंऽतो यस्यास्तीति अंति स चासौ कः कालश्च । नामैकदेशे नामग्रहणमिति न्यायात् । तस्मिन्काले ब्रह्मा उक्तार्थमवस्थितं ॥ स्वपित्रे । हिरण्यकाय ॥ अकुपितं । भगवद्द्वेष्टत्वात्कोपविषयायापि पितृत्वादकुपितं । शोचंतमिति यावत् । प्रल्हादं प्रेषयामास । यद्वा । अकुपितं स्वस्मिन्कदाऽप्यरुष्टं तथाऽपि प्रभुं स्वामिनं । स्वामीराजगुरुभर्तारः कदाऽपि न विश्वसनीयाः किंतु तदिंगिताचरणेन तोष्टव्या एवेत्यनेन सूचितं । तं मत्वेति शेषः । संप्राप्तप्रसादकालं प्रल्हादं स्वपित्रे स्वजनकाय विष्णवे तं प्रशमायितुं तोषयितुं वेति भावात् । अथवा । हे अपितामह । अकारस्तु पितामह इत्युक्तेः । त्वं मां कुपितं ऐहि ईहि वा जानीहि । इण् गताविति धातोर्गत्यर्थानां ज्ञानार्थत्वाच्च । अतः तात । वात्सल्यस्थानभूतार्थकतातशब्दस्य संबोधनरूपप्रथमात्वात् । सप्तसु प्रथमेति सूत्रेण तस्य तृतीयार्थकत्वात् । प्रल्हादेनेत्यर्थः । उपप्रशमय शांतं कुरु । इतींगितज्ञ इति शेषः । ब्रह्मा । अंतिके । पूर्वोक्तरीत्या निर्णीतेऽनित्यत्वाद्वर्तमानकाले । अवस्थितं अस्य विष्णोः वं वानं प्राप्तिर्यस्मात्तादृशानुग्रहस्य स्थितं स्थितिर्यस्मिंस्तं । अत एव । प्रभुं कोपोपशमनसमर्थं प्रल्हादं । स्वपित्रे स्वदत्तवरपालकाय नृसिंहाय । प्रेषयामास । प्रल्हादप्रेषणादिंगितज्ञानेन ब्रह्मणोऽतिप्रसादप्राप्तिरेवावसीयते न भीतिरिति भावः । अपि वा । हे तात वत्स प्रल्हाद । स्वपित्रे त्वत्कृते त्वत्पित्रे । कुपितं । प्रभुं नृसिंहं । उपेहि उपेत्य । एककर्तृकक्रमके क्रियाद्वये प्रायः पूर्वक्रियायाः ल्यबंतार्थकत्वनियमात् । प्रशमयेति ज्ञापयन् प्रल्हादं प्रेषयामास । उक्तं च तात्पर्ये । प्रल्हादेनैव वात्सल्यदर्शनाय हरेरपि । ज्ञात्वा मनस्तदा ब्रह्मा प्रल्हादं प्रैरयत्तदेति ॥ ३ ॥ स तत्करेति । अत्राभिव्यक्तपरमात्मदर्शन इत्यनेन फलप्राप्युक्तौ तत्साधनध्यानस्यानुपयोगात् । न हि पारगस्य नौकाश्रयणं युज्यते । अतो विरोधोऽत उच्यते । अत्र हि यत्तच्छब्दाध्याहारेण योजना । तथा हि । यतः पादपद्मं हृदि । दधौ इति लिटा पूर्वं दधारेत्यर्थः । ततः सपद्यभिव्यक्तपरमात्मदर्शनोऽभूत् । अतो न फलप्राप्त्यंते साधनांगीकारइत्यर्थः । यद्वा । अपूर्वरूपसाधनस्य क्षयेस्वर्गभोगरूपफलस्यापि क्षयदर्शनात् । ध्यानरूपसाधनक्षये दर्शनस्यापि क्षयप्रसंगात् । ध्यानस्याक्षयत्वावश्यकतया जातेपि परमात्मदर्शने तत्त्यागायोगात्तथोक्तिः । न च नौकादृष्टांतोऽत्र युज्यते । न हि तस्या निर्गमस्थलादारभ्य गम्यस्थलपर्यंतं गमनसाधनत्वं दृश्यते । किं तु नदीरूपगमनप्रतिबंधकस्योत्तारकत्वेन निवर्तकमात्ररूपत्वं । अतो मुख्यसाधनत्वाभावान्नौकाश्रयणयोगेऽपि । व्रजंस्तिष्ठन्पदैकेन यथै-

वैकेन गच्छतीत्युक्तविधया पादव्यापारस्य गमनमुख्यसाधनत्वात् । तस्य त्यागे गमनस्याप्यसिद्धेस्तदाश्रयणं यथावश्यकं तथाऽपरोक्षस्य मुख्यसाधन ध्यानस्याप्याश्रयणीयत्वमावश्यकं । न च मनःसहायस्यैवेंद्रियस्य विषयग्राहित्वान्मनसो ध्याननिष्ठायां तदनानुकूल्येन चक्षुषो बहिर्दर्शनासंभवः । प्राप्तपूर्णध्यानयोगस्योभयग्रहणशक्तत्वात् । अत एव क्लिन्नहृदश्रुलोचन इत्युक्तं । ध्यानेन क्लिन्न हृद्दर्शनेना-श्रलोचन इति तत्राभिप्रायः ॥ ६ ॥ **अस्तौषीदिति** । अत्रैकाग्रमनसा सुसमाहितस्तन्यस्तहृदयेक्षण इत्येतैः पुनरुक्तिप्रसंगः । त्रयाणा-मप्येकाशयत्वादिति चेन्न । भिन्नार्थकत्वात् । तथाहि ॥ **सुसमाहितः** । मया ज्ञानेन सहितः समः । मा ज्ञान इति धातोः । सुतरां समेन नारदेन आहितः शिष्यत्वे स्थापितः । यद्वा । सुतरां समाः आहिताः शत्रवः कामादयः इंद्रादयो वा यस्य स तथा । अथवा । समाः उदासीनाः अहिताः शत्रवश्च । शोभनाः समाहिताः यस्य सः । अनेन किं पुनः सखाय इति ध्वनितं । असुसमाहिता इति पदं । असुना प्राणेन समो ब्रह्मा । अथ विधिप्राणनाथावित्युक्तेः । तेन आय विष्णवे आहितः प्रहितः । तेन विष्णुपुरतः स्थापितो वा । अयं शोभनोऽयमुदासीनोऽयमहित इति यस्य दृष्टिर्नास्ति सोऽसुसमाहितः कः शत्रुः क उदासीनः किं मित्रं चेहात्मन इति प्रल्हादोक्ताक्षेपानां विपर्यये पर्यवसानात् ॥ **तन्यस्तहृदयेक्षणः** । तस्मिन्स्वकर्तव्यस्तवने न्यस्तं हृदयं मनो येन तं नृसिंहमीक्षयतीति स तथा । प्रल्हादः ॥ हरिं । नृहरिं ॥ **एकाग्रमनसा** । एके मुख्यान्यकेवला इत्युक्तेः । मुख्यः सर्वोत्तमः । अन्यः सर्वविलक्षणः । केवलः जडामिश्रः । अद्वितीयो हरिरग्रे सन्मुखे यस्य तादृशं मनो यस्यां तया । पृथक् तादृश मनसा वा ॥ **प्रेमगद्गदया** । आल्हादपूरेणावि-स्पष्टाक्षरया । वाचा ॥ **अस्तौषीत्** । तुष्टाव । एवमर्थसद्भावान्न पुनरुक्तिः ॥ ७ ॥ **विप्रादिति** । अत्र ब्राह्मणापेक्षया चांडालव-रिष्ठत्वमुक्तं । तच्च । न ब्राह्मणैस्तुलयेभूतमन्यत् । वर्णानां ब्राह्मणो यथेत्यादिभिर्विरुध्येतात उच्यते । अत्र ब्राह्मणापेक्षया श्वपचस्य न वरिष्ठत्वमभिप्रेतं । अभक्तस्य चांडालादपि नीचत्वसूचनायैवमुक्तिः । अन्यथा । वरं स्वमात्रगमनं वरं गोमांसभक्षणं । वरं हत्यासुरापान-मेकादश्यन्नभक्षणादित्यत्रोक्तस्वमातृगमनादेरपि वरिष्ठत्वप्रसंगात् । न हि स्वमातृगाम्यान्नादयोः पांक्तत्वापांक्तत्वे दृष्टे । तद्वद्ब्राह्मणश्वपचयोः पूज्यत्वापूज्यत्वे च । तस्मादन्नादस्य स्वमातृगाम्यादिसकाशाद्यथाऽतिनिंदितत्वं । एवमभक्तस्य श्वपचादप्यतिनिंदितत्वमेवोच्यते । न तस्य वरिष्ठत्वं । अतो न कश्चिद्विरोधः । यद्वा ॥ **विप्रात्** । सामान्यब्राह्मणात् ॥ **द्विषड्गुणयुतात्** । अत्रोत्तरत्र च भावप्रधानो निर्देशः । ततो ज्ञानं च सत्यं च दमः शमश्चामात्सर्यं ह्रीस्तितिक्षाऽनसूया । दानं च यज्ञश्च तपः श्रुतं च महाव्रतानि द्वादश ब्राह्मणस्येत्युक्तत्वात् । द्वादशगुणकत्वेनेत्यर्थः । वरिष्ठमपि ब्राह्मणमरविंदविमुखत्वेन श्वपचं । लुप्तोत्प्रेक्षितत्वात् । चांडालमिव मन्ये । तु शब्दो हेत्वर्थे ॥ यतो-



ऽतदर्पितवचनात्मगेहप्राणः । हर्यनर्पितमन आदिः । स्वपचतुल्यो ब्राह्मणः ॥ **सकलं** । पंचदशकलाभिः सहितं । शरीरं न पुनाति किमुतान्यानित्यर्थः । तत्र हेतुगर्भाविशेषणं ॥ **भूरिमान इति** । पंडितमानीत्यर्थः । अतस्त्वद्भक्तिरेव महत्वे प्रयोजनकेति भावः । **विप्रादिति** श्लोकोक्तद्वादशगुणानां तात्पर्यस्थसनत्सुजातीयवाक्येन पृथक् प्रदर्शने शमस्य ग्रहणेन । शमो मन्निष्ठता बुद्धिरिति भगवद्वचसा बुद्धे-र्भगवन्निष्ठताया एव सदर्पितमनस्कत्वादिसिध्याऽरविंदनाभपादारविंदवैमुख्याभावात्कथं विप्रतः श्वपचवरिष्ठत्ववर्णनमतो विरोधः । तत्रो-च्यते । कुरुपांडवन्यायेन यत्र विरोधस्तत्र शमशब्दस्य सौम्यत्वार्थकताऽभ्युपगम्यते । यत्राविरोधस्तत्र बुद्धेर्भगवन्निष्ठार्थकत्वं । अतो विप्रस्य केवलसौम्यता सिद्धावपि भगवत्पादारविंदवैमुख्यसद्भावे सति श्वपचान्नीचत्वसिद्धिः । ननु जात्यैव ब्राह्मणः पूज्यो न तत्र गुण चिंतनमित्युक्त्या कथं ब्राह्मणस्य श्वपचनीचत्वं । नात्र श्वपचशब्देन जातिचांडालो गृह्यते किंत्वेकादश्यन्नभोजी तु चांडालो नात्र संशय इति पाद्मवचनात्कर्मचांडाल एव । तदपेक्षया ब्राह्मणस्य नीचत्वेजातिभेदत्वाभावान्न पूज्यत्व हानिः । एतदपि पूजनाविषय एव न भगवत्प्रीतिविषये । यस्यास्तु गुणहेतुकत्वमेव । ज्ञानेनैव परं पदमित्युक्तेरतोऽपि न कश्चन विरोधः ॥ १० ॥ **तत्संभव इति** । अत्र कविरित्युक्त्वा कथमिहोपलभेतबीजमित्याक्षेपेणाज्ञाने पर्यवसानामिति विरोधोऽत्र उच्यते ॥ **ना** । पुरुषः । बीजादंकुरे जाते सति ॥ इह । अंकुरे ॥ **बीजं** । वृक्षव्यंजकत्वाद्बीजसंज्ञां देवतां । कथमुपलभेत । यदा बीजस्था देवतांकुरस्था जाता तदा बीजस्थित्यभावाद्बी-जसंज्ञाऽपि गता । अंकुरस्थत्वादंकुरसंज्ञां च प्राप्ता । ततोंऽकुरसंज्ञकां देवतां कथमुपलभेत । किंतु नैव लभेतेत्यर्थः । अतोऽब्दशतं ममायुः पर्यंतं ॥ **अप्सु** । जन्ममरणलक्षणासु ॥ **अब्दशतं** । स्वायुःपर्यंतं । अब्दशब्दस्य कर्मनामसुपाठात् । अप्सु कर्मसु वा । निमज्जमानःसन् नकारस्यावृत्त्या ॥ **नाविंदत्** । बीजसंज्ञां देवतां न विंदेत । लकारव्यत्ययस्त्वार्षः ॥ इति विचिन्वत् । विचारं कुर्वन् । ॥ **तत्संभवः** । तस्मात्प्रकृत्यात्मकात् पद्मा-त्संभवो यस्य सः ॥ **कविः** । ज्ञानी ब्रह्मा । अतः स्वाधितिष्ठितपद्मादन्यद्द्वितीयमपश्यमानः ॥ **बीजं** । बीजसंज्ञक देवतावत् कार्यस्थितं स्वां ॥ **आत्मानि** । स्वात्मांतः बहिश्च ॥ ततं । व्याप्तं । ददर्शेत्युत्तरेणान्वयः । यद्वा । शतं स्वायुः पर्यंतं । अप्सु कर्मसु । निमज्जमानो निष्णातः । अनेन कर्मण्येव प्रवृत्त्या भगवत्ज्ञानशून्योपलक्ष्यते । तादृशः पुमान् । अंकुरे जाते सति बीजं विचिन्वन्सन् । इह अंकुरे । कथं बीज-मुपलभेत । किंतु नाविंदत् । इति कविः ज्ञानी । शेषं पूर्ववत् । अथवा । अविददब्दशतमित्येकं पदं । पूर्तिमलभमानमब्दशतं । परार्धमिति यावत् । पूर्तौ परमपूर्तौ परार्धमिति द्वयोरेव प्रसिद्धेः । तप्त्वा पूर्वपरार्धे तु द्वितीये ससृजे प्रजा इत्युक्तेः । अन्यथा अब्दशतमिति किं ब्रह्ममानेन वा नृमानेन वा । नाद्यः । सृष्ट्यर्थं ब्रह्मायुषो द्विपरार्धाधिक्यप्रसंगात् । नापरौ अल्पत्वेन कथनायोगात् । तस्मात्तत्पर्यंतमे-

वाप्सु निमज्जमानो निमग्नो भूत्वा । निर्निश्चयनिषेधयोरिति कोशात् । निवातवत् अमज्जमानो जलोपरि तिष्ठन्वा । अथवा । अप्सु-निमज्जमान इत्येकं पदं । आप । आ पालनाद्विष्णुरित्यनुव्याख्यानोक्तेः । अप शब्दवाच्यो विष्णुस्तस्मिन् सु सम्यक् नितरां मज्जमानः तद्विषये तपः कुर्वन्निति यावत् । जातेऽङ्कुरे कथमिहोपलभेत बीजमिति । विचिन्वन् विनिश्चयं कुर्वन् । आत्मनि स्वात्मांतः । तदुपलक्षितस्वात्मांतस्थभूतेषु च बहिः स्वदिक्षु तथा कालाकाशपद्मलयोदयेषु च । ततं व्याप्तं । बीजं स्वव्यंजकं । विष्णुं ददर्शेति । अथवा । उक्तप्रकारेण । कविः ज्ञानी । तत्संभवः पद्मभवो । ब्रह्मा त्वां । आत्मनि स्वविषये । बीजं उपादानं । अपश्यमानः सन् । अत उपादानादन्यद्भिन्नं । तसेः सार्वविभक्तिकत्वात् । बं । अः ब्रह्मेति श्रुतेः । विष्णुं । अन्यद्भिन्नं निमित्तरूपं । व्यंजकं व्यंजकत्वात्तत्स्थं संज्ञं च देवतारूपं । ततं स्वजनकं । ददर्श । अविंदिदिति पृथक् पदपक्षे अविंदद्वा । तदुक्तं । स्थावराणां च सर्वेषां देवतायाभिमानिनी । विशेषाद्वटबीजे चाश्वत्थे च व्यवस्थिता । अदृश्याकणिका नाम सा वृक्षान्व्यंजयंत्यपि । अतो बीजमिति प्रोक्ता साजातेष्वंकुरस्थिता । एवं हरिः कारणेषु स्थितः कार्यजनेरनुकार्याण्वनुप्रविष्टः सन्प्रथमं दृश्यत इति तात्पर्यं । तस्माज्जातेऽङ्कुरे इत्यादिविचारस्य ब्रह्मकृतत्वान्न विरोधगंधोऽपि ॥ ३४ ॥ इत्थमिति । अत्र कलाववतारो नास्तीत्युक्तं । तदयुक्तं । आसन्वर्णास्त्रयो ह्यस्य गृण्हतोऽनुयुगं तनूः । शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गत इत्युक्त्वा कृष्णतनुग्रहणस्य कलिप्राप्तत्वात् । मैवं । द्वापरांत्यभाग एव कृष्णावतारग्रहणात् । कृष्णस्य मर्त्यलोकत्यागकाल एव कलिप्रवृत्तेरुक्तत्वाद्द्वादशे । न चेदानीं कृष्णतां गत इत्यस्य का गतिरिति वाच्यं । इदानीं शब्देन केवलकलिकालानंगीकारात् । किंतु युगसंध्युक्तकल्यंशसहितद्वापरांत्यभागस्यैवांगीकारात् । तथाहि । महायुगं द्वादशाब्दसहस्रवर्षात्मकं । तत्र विवेकः । चत्वारित्रीणि द्वे चैकं द्विगुणैश्च शतैर्युतं । वर्षाणां दिव्यसाहस्रं कृतादिषु यथा क्रमं । शतानि युगसंधौ स्युः सहस्राणि यथा युगमित्युक्त्या कलियुगस्य द्वेशते संधिस्थिते । तत्रांत्यमेकशतं कृते प्रविशति । आद्यमेकशतं । द्वापरे । तत्र नृमानेन चतुः षष्ठिसहस्रोत्तराष्टलक्षाब्दमितद्वापरे षट्त्रिंशत्सहस्राब्दोने सति कलिप्रवेशः । तथा द्वात्रिंशत्सहस्रोत्तरचतुर्लक्षाब्दात्मककल्याद्यभागे द्विसप्ततिसहस्रवर्षपर्यंतं द्वापरांशस्थितिः । कलेरंत्यभागे चतुश्चत्वारिंशत्सहस्रोत्तरैकलक्षाब्दोने कृतप्रवेशः । अष्टाविंशतिसहस्रोत्तरसप्तदशलक्षाब्दके कृते षट् त्रिंशत्सहस्राब्दपर्यंतं कल्यंशस्थितिः । एवं सति कल्यंशसहिते द्वापरे कृष्णप्रादुर्भावात्कृष्णवर्णस्वसिध्या इदानीं शब्दस्य युक्तैव गतिः । तथा केवलकलाववताराभावात्त्रियुगोक्तिरपि । न च कलौ बुद्धावतारेण विरोधः । तास्मिन्नपि द्वापरांशसहित एव तदंगीकारात् । नापि कल्क्यवतारेण विरोधः । तस्यापि कृतांशसहित एव कालावभ्युपगमात् । अत एव सत्वं यद्यस्माच्छन्नोऽवताराभावादा-



च्छादितोऽभवः अभूः । यद्वा । अभवः अनवतारः । अतः छन्नः । अथ एतद्धेतोस्त्रियुगः । त्रिष्वेव युगेषु अवतारैर्युज्यते स तथा । तस्मात्त्रियुगेति नामान्वर्थकमिति भावः ॥ ३८ ॥ तत्व इति । अत्र षडंगयेत्यनेन सेवायाः षडंगत्वमुक्तं । तत्त्वे मन इत्यादिना पंचांगानामेव लाभाद्विरोधोऽत उच्यते । अपि शब्देन ऋतेऽपीत्यग दशमग्रहणमिव पादौ स्वक्षेत्र सर्पणे इति ग्राह्यं । तेन षडंगसिद्धिः । ननु निर्माल्यगंधादिषु घ्राणादेरपियोग्यत्वादपिशब्दग्राह्यस्यानियतत्वाच्च पादग्रहण एव नियामकाभावान्न षडंगसिद्धिरिति चेन्न । एकादशेंद्रियाणां मध्ये षण्णां ज्ञानकारणत्वात्पंचानां कर्मेंद्रियत्वाज्ज्ञानेंद्रियेषु मनोदृक्श्रवणानां त्रयाणां गृहीतेः । कर्मेंद्रियेषु तु वाक्करयोर्द्वयोरेव ग्रहणाज्ज्ञानसमवर्तिषु त्रयाणामेव ग्रहणौचित्यने विजयध्वजाचार्यादिभिश्च तस्यैव स्वीकारेण पादग्रहणस्यैव युक्तत्वात्तेन षडंगसिध्या न विरोधापत्तिः ॥ ४० ॥ इति श्रीभागवतटिप्पण्यां नवमोऽध्यायः ॥ ७--९ ॥

॥ हरिः ॐ ॥ नम इति । अस्य मंत्रस्य नृसिंहप्रादुर्भावात्पूर्वमेव नारदेन प्रल्हादायोपदिष्टत्वाद्रूपाभावेऽप्युपासना कथमिति चेत् । भविष्यज्ज्ञेन नारदेन कृतोपदेशाद्युक्तमेव । राजसिंहवदद्भुतसिंहाय । आश्चर्यश्रेष्ठायेत्यर्थोद्वा ॥ ११ ॥ भोगेनेति । अत्र पुण्येन पुण्यलोकं जयतीति श्रुतेः । केन मे पूर्वपुण्येन दृष्टोऽसि भगवान्मयेत्यादि स्मृतेश्च । भगवत्प्राप्तौ पुण्यस्यावश्यकत्वे पुण्यहानं कथमुक्तमित्यत कथ्यते । अत्र कामस्यैव हेयत्वं न निष्कामस्य । प्रवृत्तं च निवृत्तं च द्विविधं कर्मवैदिकं । आवर्तते प्रवृत्तेन निवृत्ते नाश्नुतेऽमृतमिति । निष्कामं ज्ञानपूर्वं तु निवृत्तमिहोच्यते । निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनमित्युक्तेश्च ॥ १४ ॥ त्रिरिति । अत्र कश्यपमरीचिविरिंचानां त्रयाणामेव पितृणां सत्वात् । त्रिसप्तभिरित्यनेन सूचितानामेकविंशानामुपलब्धेर्विरोधोऽत उच्यते । त्रिरित्यव्ययं । त्रिभिरित्यर्थः । ॥ पितृभिः । मारीचिमरीचिविरिंचिभिः सप्तभिर्गोत्रैः पितृमातृपितृष्वसृमातृष्वसृस्वस्वसृदुहितृदारपितृगोत्रैः सहेति ॥ पिता । हिरण्यकशिपुः । पूतः । त्रिषु जन्मसु वा । तत्पक्षे दैत्यजयतत्पूर्वजन्मस्वित्यर्थः । काश्यपपौलस्त्यचैद्यजन्मसु वा । सप्तगोत्रैः सह पूतः । तत्र हेतुः । यदित्यादिना । यद्वा । हे साधो । यत् यस्मात् । ते पिता । अस्य स्वस्य । कुले जातः जातं त्वां । सप्तसु प्रथमेति सूत्रात् । नच नैव । सहते क्षमते । अतः अपूतः अपवित्रः । यादित्यावर्त्य । अस्य विष्णोः । भवान् ज्ञानवान् । कुले जातः सन् । त्रिः त्रिभिः । स्वपूर्वोत्तर पुरुषैः । सप्तभिर्गोत्रैः । पितृभिः पितृपितामहप्रपितामहैः । पितृमातृमातामहादिभिर्वा । इत्थं भूतलक्षणे तृतीया । सहेत्यर्थः । कुलपावनो वै । किमुवक्तव्यं तं पवित्रीकुर्यादिति । इदानीमसहनं समाप्तं । अतः पूतोऽपि जात इति भावः । किंवा । हे साधो भवान् । त्रिः त्रिष्वपि जन्मसु मध्ये । अस्य हिरण्यकशिपोः । कुले अभवान् विष्णु-

ज्ञानवान् । त्वं पुत्ररूपेण प्रजातोऽसि । अतस्ते पिता सप्तगोत्रैः पूतः द्वितीयजन्मनि । अभवान्विष्णुज्ञानि । बिभीषणाख्यबंधुरूपेण जातो भविता । निश्चयेन भवितव्ये भूतवद्व्यपदेशः। अतः पितृभिः पूतः । तृतीयं जन्मन्यपि अभवान् दमघोषाख्यपितृरूपेण जातो भविता। अकारेण प्रश्लिष्ट तस्य नञर्थकत्वेन भूतार्थविरुद्धार्थकत्वाद्वा । दमघोषं प्रकृत्योक्तं तात्पर्यनिर्णये । गंधर्वोऽसौ दनुनामा नरोऽभूत्तस्मात्कृष्णे भक्तिमांश्चास राजेति । पितृभिर्गोत्रैः सहथ सहैव तेन शप्तजयरूपत्वेन पूतःस्यात् । इदानीं सांपरायिककर्मविषये पूतो न पुनः शापत इति भावः । यद्वा । हे साधो भवान् । अस्य हिरण्यकस्य । कुले जातोऽप्यजातः । यत् यस्मात् । ते पिता । त्रिः त्रिभिर्वसुरुद्रा-दित्यैः । आदित्या वसवो रुद्रास्त्रिविधा हि सुरा यतः । मरुतश्चैव विश्वे च तद्गताः । अतस्त्रय इति प्रोक्ता इत्युक्तेः । उपासतोपाय-नपाणिभिर्विना त्रिभिरिति चात्रोक्तेः । देवैरित्यर्थः । सप्तभि ऋषिभिः पितृभिश्च सहितमिति देवर्षिपितृसहितं त्वां । न च नैव । सहते । अतस्त्वमस्य कुलपावनोऽसि । न पुनस्तन्मात्र पावन इति भावः । तर्ह्यस्य पूतता कदा भवेदस्याप्येतदेवोत्तरं । तथाहि । हे प्रल्हाद । यत् यस्मात् । अस्य विष्णोः । अधः नीचैः साऽविद्याऽस्ति । अतेऽजातः । तसेः सार्वविभक्तिकत्वात् । अजापरपर्याया-विद्ययेत्यर्थः । पितृभिः शापजनकैः । सप्तभिः सनकादिभिश्चतुर्भिः । मम संकल्पेनैकेन पूर्वकर्मणाचैकेन । एतेषां षण्णां प्रेरकेण मया चैकेनेति सप्तभिः । अपूतः अपवित्रीकृतो यः । पिता त्वत्पिता । स त्रिःत्रिवारं । हतेन हननेनैव पूतः स्यात्तदा त्वमस्य तृतीयजन्मनः कुले । अजात इत्यावर्त्यं । अजातोऽपि कुलपावनः । कुलपस्य मुख्यस्य हिरण्यकशिपोः । अवनः रक्षकः । वै निश्चयेन स्याः । अथवा । उक्तरीत्या पूर्वार्धार्थमंगीकृत्योत्तराधार्थोऽन्य उच्यते । हे साधो । यत् यतः । लोकपावनस्त्वं कुले जातोऽसि । अतोऽस्य भवान् शापजातिरिक्तजन्मा निरस्य समापय । षोंतकर्मणीति धातोः । त्रिःसप्तभिरिति पाठे तु मध्यमपदलोपीसमासः । न्यूनसप्तभिः चतुर्भिः सनकादिभिः । अपूतः शापादपवित्रीकृतः । ते पिता । यतोऽस्य कुले भवांस्त्वं कुलपावनो जातः । अतः पितृभिः पूतः सह स्वयं नघ नैव पूतः । प्राधान्यस्येत्यत्र । घशब्दस्य एवार्थकत्वदृष्टेः । शापसमाप्तेरिति भावः ॥ १९ ॥ प्रह्लादोपीति । नन्वत्र न पितुः सांपरायिककरणे प्रल्हादस्याधिकारः । संन्हादं प्रागनुन्हादं प्रल्हादमेवचेति हिरण्यकपुत्रक्रमोक्त्या वयसोनं गुणाधिकमिति प्रल्हादस्य विशेषितत्वाच्च । तज्ज्येष्ठत्वाभावादिति चेन्न । दुरासदं सर्वनिर्जितरायुधप्रवेकविद्रावितदैत्यदानवमित्युक्त्या संन्हादादिषु विद्रुतत्वेन समये निकटावर्तिषु कनीयसोऽप्यधिकारसद्भावात् । यद्वा । कुरुत्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः । मदंगस्पर्शनेनांग लोकान्यास्यति सुप्रजः। इत्युक्त्या मदंगस्पर्शनेन पितुः पूतत्वेऽपि परलोकावासौ सुप्रजत्वमेव कारणमतः सर्वशः सर्व पुत्रेषु मध्ये त्वं पितुः प्रेतकार्याणि कुर्विति

भगवता आज्ञप्तत्वात् । अत एव यथाहेत्याद्युक्तं । तत्काले ज्येष्ठनामसंन्निहितत्वादस्यैवाज्ञप्तत्वात्सुप्रजात्वाच्चाधिकार इति भावः । अभिषिक्त इति विशेषणं उत्तरस्थप्रल्हाद इत्यनेन योज्यं ॥ २५ ॥ किंच प्रल्हादस्य ज्येष्ठत्वाभावेन कथं पितृराज्याधिकार इति चेन्न । परंपरागतराज्यस्यैवाधिकारो हि ज्येष्ठस्य नृपत्वं हि तस्य । अत्रतु । तं हत्वा राज्यस्य नृसिंहेन हृतस्य प्रल्हादाय दत्तत्वाच्च न ज्येष्ठस्याधिकारः । किंतु । पित्र्यं च स्थानमातिष्ठेति भगवदाज्ञया तस्यैवाधिकारौचित्यात् । न हि कनीयसा नवार्जिताधिपत्यंज्येष्ठस्य क्वापि दृश्यते । अपि च प्रल्हादक्रियमाणराज्यस्य निहतकंटकमिति विशेषणं युज्यते । प्रल्हादस्य दैत्ययोनित्वेन तद्विरोधिनां देवानामेव कंटकरूपत्वात्तेषां चेह हननाभावात् । इति चेत् । मैवं । तस्यार्थांतरसद्भावात् । तथाहि ।। निहतकंटकं । निहतः कंटकः प्रल्हादस्य द्वेष्टत्वेन तद्रूपो हिरण्यकशिपुर्यस्मिंस्तद्राज्यमिति । यद्वा । निवातेत्यादौ नि शब्दस्य निषेधार्थत्वदृष्टेः । निहताः अहताः कंटकराज्यापेक्षया विरोधित्वेन कंटकरूपाः संन्हादादयो यस्मिन् विद्यमान ज्येष्ठभ्रातृकमपि राज्यं भगवदाज्ञया द्विजोत्तमाभिषिक्तत्वाच्चक्रे इत्यभिप्रायः । अथवा । निःश्वासनिपातादौ नि शब्दस्य नीचार्थकत्व दृष्टेः । हन हिंसा गत्योरिति धातोश्च । निहता नीचत्वं गताः । कंटकाः लोकपीडका महादैत्या यस्मिंस्तत् । किंवा । उत्तरार्धस्य हरिविशेषणत्वेन निहतकंटकमिति पदं योज्यं ॥ २६ ॥ मैवमिति । अत्र ब्रह्मणः स्वस्य प्रतिदिने एव भगवदाज्ञायां सत्यायामपि पुनर्वरप्रदानेन भगवदाज्ञाभंगप्राप्तिरिति चेत् । उच्यते ॥ असुराणां । हिरण्यकशिपुव्यतिरिक्तानामेवं वरो न देय इत्यसुरशब्देनैव सूचितं । न सुरः जयांशः येषु इति विग्रहात ॥ २१ ॥ इतिश्रीभागवतटिप्पण्यां दशमोऽध्यायः ॥ ७–१० ॥

॥ हरिः ॐ ॥ सुप्तबोधयोरिति । अत्र बंधमोक्षयोर्मायामात्रत्वमुक्तं । तथाथातथ्यतोऽर्थान्व्यदधादिति । विश्वं सत्यं मघवानित्यादिश्रुतिभिः । विश्वं सत्यं वशे हरेरित्यादिश्रुतिभिर्विरुध्येत । अत्रोच्यते । बंधं मोक्ष्यं च मायामात्रं न पश्यन् किंतु वस्तुतः पश्यन्सन् । यद्वा । माया हरीच्छा । मायेतीच्छा समुद्दिष्टेति वचनात् । महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छानंत कथ्यत इति तत्त्वनिर्णयोक्तेश्च । तया निर्मितं । तया मित्वात्त्रातं मायामात्रं वा । मायेति भगवत्प्रज्ञा सैव मानत्राणकर्त्री च यस्य तन्मायामात्रं । परमेश्वरेण ज्ञातत्वाद्रक्षितत्वाच्चेति तत्त्वनिर्णये व्याख्यातत्वात् । द्वैतं न विद्यत इति तस्मादज्ञानिनां मतं । मतं हि ज्ञानिनामेतन्मितं त्रातं च विष्णुना । तस्मात्सत्यमिति प्रोक्तं परमो हरिरेव हीति परमश्रुतेश्च ॥ न वस्तुतः । न स्वतंत्रं । स्वतंत्रं वस्तुशब्दोक्तं अस्वतंत्रमवस्तु यदिति शब्दनिर्णयोक्तेः । बंधमोक्षविषयं सर्वजीवजातं न स्वतंत्रमिति भावः । किंच मायामात्रमिति

विशेषणं केवलबंधस्य वा मोक्षस्यापि । नाद्यः । नियामकाभावात् । न द्वितीयः । मोक्षस्य मिथ्यात्वापातेन सिद्धांतविरोधात् । तस्माद्भ-
गवत्कृतत्वेनास्य सत्यत्वमेव । बंधमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराडिति स्कांदे । यः सत्यरूपं जगदेतदीदृक् सृष्ट्वात्वभूत्सत्यकर्मा महा-
त्मेति श्रुतेश्च ॥ ५ ॥ स्वात्मवृत्तमिति । अत्राजगरवृत्तस्य शास्त्रीयत्वेऽपि लोकशास्त्राभ्यां व्यपेतमिति कथमुक्तमिति चेत् । उच्यते ।
लोकस्तदनुवृत्तिः । शास्त्रं प्रमाणांतराबोध्यार्थबोधकं वाक्यं । तदुभाभ्यां ॥ व्यपेतं । रहितं । लोकानुवृत्तिसहितशास्त्रसहितमित्यर्थः ।
न तु केवलाशास्त्रीयं । स्वप्रौढ्याभिमानपरिहारायाशास्त्रीयमिति वक्तव्यमात्रं प्राप्तं । आंतरस्तु शास्त्रीयमेवेति यावत् । तदुक्तं । अशास्त्री-
यत्वान्मुखतः शास्त्रोपेतमिदं विदुः । शास्त्रनिर्णयगम्यत्वाच्छास्त्रीयमभिधीयत इति ॥ ४५ ॥ द्वादश्यामिति । अत्र श्राद्धं पित्रोर्यथा-
वित्तं तद्बंधूनां च वित्तवानिति पूर्वं श्राद्धविधिरुक्तः । अयने विषुवे कुर्व्हामित्यादिना जन्मर्क्षे सौम्ययोगयुक् इत्यंतेन कालविशेषाश्च
तदर्थमुक्ताः । तन्मध्ये एकादश्यपि प्राप्ता । तथा च । एकादश्यां पंचयज्ञान्प्रयत्नेन विवर्जयेत् । न होतव्यं न भोक्तव्यं पितृभ्योऽन्नं
न दीयत इत्यादिवाक्यैस्तन्निषेधोऽपि दृश्यते । अतो विरोधस्तदर्थ उच्यते । श्राद्धविधिकालकथनं तु । अयने विषय इत्यारभ्य मास-
र्क्षाणि युतानि अपीत्यंतमेव नत्वग्रे । द्वादश्याद्युक्तकाले श्राद्धविधेरदर्शनात् । प्रत्युत तत्रोपवासादिकमेव दृश्यते । आभाकासितपक्षेषु
मैत्रश्रवणरेवती । संगमे न हि भोक्तव्यं द्वादशद्वादशीर्हरेरित्युक्तेः । मैत्राद्यपादे स्वपतीह विष्णुः श्रुतेश्च मध्ये परिवर्तमेति । पौष्यांत्य-
पादे पुनरुत्थितः स्यात्सुप्तिप्रबोधपरिवर्तनमेव वर्जमिति विष्णुधर्मोत्तरोक्तेश्च । तर्हि द्वादश्यामनुराधा स्यादित्यादेः कथनं किमर्थमिति
चेत् । त एते श्रेयसः काला इत्यादिना तेषां पुण्यकालकथनार्थमेव । अन्यथा तदेतच्छब्दाभ्यां सूचितभेदस्यानुपपत्तेः । उभयोरेक
विषयत्वे एतच्छब्देनैकपरामर्शसिध्या तच्छब्दस्य वैयर्थ्यापातात् । तस्मात्तच्छब्दगृहीताः श्राद्धविषयाः । व्यवहितत्वात् । एतच्छब्द-
गृहीता उपवासविषयाः । संनिकृष्टत्वात् । एते द्विविधा अपि कालाः श्रेयसः पुण्यसाधका इत्यर्थपरताया एवौचित्यात् । नन्वेतदग्र एव
तेषु स्नानं जपो होमं व्रतं देवद्विजार्चनं । पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरमिति श्लोके होमश्राद्धादिविधौ तेष्विति तच्छब्देनोक्तसर्व-
कालपरामर्शादेकादश्यां श्राद्धादिविधिकथनाभावः कथमिति चेन्न । तेषु स्नानमित्यादिश्लोकाग्र्यश्लोक एव परामर्शविषयस्य दर्शितत्वात् ।
तथाहि । तदग्रिमश्लोकोऽयं । संस्कारकाले जायाथा अपत्यस्यात्मनस्तथा । प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृपेति । तेषु जायासंस्का-
रादिकालेषु मध्ये जायाया भार्यायाः संस्कारे विवाहरूपे गर्भाधानलक्षणे वा । स्नानं समावर्तनं जलमज्जनं वा । समावर्तनं विना विवा-
हायोगात् । गर्भाधानांते मज्जनस्याह्निकादावुक्तत्वात् । अपत्यस्य पुत्रस्य संस्कारकाले उपनयनसमये जपः । तदधिकारसिध्यर्थं द्वादशसहस्र-



गायत्रीमंत्रजपविधेर्दर्शनात् । आत्मनः स्वस्य संस्कारे वैष्णवदीक्षालक्षणे मुद्राधारणात्मके वा । अष्टाक्षरादिहोमः सुदर्शनहोमो वा ।
प्रेतसंस्थाकाले व्रतं मधुरपदार्थत्यागरूपो नियमः । ब्रह्मचर्यं वा । मृताहः क्षयाहश्राद्धे देवद्विजार्चनं । देवस्थाने तदुपलक्षितपितृस्थाने
च द्विजार्चनं ब्राह्मणपूजनं । च शब्दात्तु संस्काररूपे कर्मणि वैश्वदेवाख्यपितृदेवनृभूतेभ्यो दत्तं दानं चतुर्णां यजनात्मकं कर्मेत्यर्थः । तस्य
चतुर्यज्ञसाधकत्वात् । अभ्युदये नांदीश्राद्धे यद्दत्तं द्राक्षामलकादिदक्षिणादानं तत्सर्वमनश्वरं । अविनाशि हि । तस्मान्नैकादश्यां श्राद्ध-
मुच्यते । एतस्मिन्ब्रह्मदिवसे नाग्निं जुहुयान्न श्राद्धं कुर्यान्न देवादींस्तर्पयेद्यदि वा तर्पयेत्स चांडालः स ब्रह्महा स गोघ्नः स पितृहा
स सर्वहा भवतीति माध्यंदिनश्रुतेः । ततश्चायमक्षरार्थः ॥ द्वादश्यां । आषाढशुक्लद्वादश्यां । ॥ अनुराधा । तदाख्यं नक्षत्रं । चेच्छ्रेयः
कालः । यद्वा । अनुराधा पश्चात्साद्दश्ययोरनु इत्यभिधानात् । अनुवृत्तायाः पश्चात्तनायाः । दशम्याः । राधा । राधसाधसंसिद्धाविति
धातोः । सिद्धवेध इति यावत् । स्याच्चेत् । द्वादश्यामुपवासार्हतारूपः कालः । षट्पंचाशद्घटीपूर्णा पादोना च यदा भवेत्
उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणमित्युक्तेः ॥ श्रवणः । तन्नामकनक्षत्रं । अत्र ल्युडंतत्वेऽपि पुल्लिंगत्वं तद्देवताविष्णुलिंगविव-
क्षयेति बोध्यं । यद्वा । श्रवणे श्रवणेन णः सुखं यस्य सः । अथवा । श्रूयते णः सुखरूपो विष्णुर्दैवतत्वेन यस्मिन्निति । णश्च निर्वृति-
वाचक इति कृष्ण शब्दनिरुक्तौ । द्वादश्यां चेत् भाद्रपदशुक्लद्वादशां यदीत्यर्थः । तथा माघफाल्गुण कृष्णः द्वादश्यामपीति । द्वादशीं
श्रवणोपेतां यो नोपोष्यात्स मंद धीरित्यादिना निंदनात् । अनुपवस्तुः न च शुक्ल एव तदिति वाच्यं । अत्रान्यत्र च तदुल्लेखादर्शनात् ।
आभासितपक्षेष्वित्यत्र तन्निर्देशस्तु मैत्यादिसाहचर्यात् । न केवलश्रवणविधाने ॥ तिस्र उत्तराः । उत्तरा फाल्गुन्युत्तराषाढोत्तराभा-
द्रपदाः । एतदुक्तपौर्णिमाः । आषाढीचातुर्मास्यारंभदिनत्वात् । अथवा । तिस्रः सानुराधाद्या आषाढादिद्वादश्यो याम्यः सकाशा-
दुत्तराः परादिनस्थास्ता एकादश्यः पुण्याः । ननु मित्रश्रवणरेवतीनां सहपाठेऽपि रेवत्या एवानुक्तिः कथमिति चेन्न । द्वितीयपादेनैव
तस्या अप्युक्तेः । तथाहि । उत्तराः सर्वर्क्षेभ्यस्था रेवतीत्यर्थः । न च बहुवचनानुपपत्तिः । अनुराधान्हविषा वर्धयंतः । चेन्न वर्षेति
कृत्तिका इत्यादिष्विव तदंगभूत ताराणां बाहुल्येनोपगमात् । एवं तिस्र इति तु अनुराधाश्रवणरेवत्यो द्वादश्यां द्वादश्यधिकरणाश्चेत्पुण्यां
इत्यर्थः ॥ आसु । अनुराधादिषु । एकादशी चेत्सोऽपि श्रेयः कालः ॥ जन्मर्क्षे । स्वजन्मर्क्षे ॥ सौम्ययोगयुक् । सौम्यश्चांद्रबुधगुरु-
शुक्राः तेषां संयोगः संबंधः तेन युज्यते तत्तथा । जन्मनक्षत्रे चंद्रादयश्चत्वारो राश्यंतरं प्राप्ताश्चेत्स कालः श्रेयस्कर इति वा । यद्वा ।
जन्मर्क्षे कृष्णाष्टम्यां रोहिणी नक्षत्रं सौम्यो बुधवासरस्तद्योगयुक् चेत् श्रेयान् । तद्वासरे कृष्णावतारोक्त्या विशेषफलदायकत्वात् ।

अथवा । जन्मर्क्षं स्वजन्मनक्षत्रं श्रेयः । सौम्ययोः मृगर्क्षेंदुवासरयोः । योगयुक् दिनं श्रेयः । सोमे च सौम्ये इत्युक्त्याऽमृतसिद्धि योगाख्यात्वात् । अपि वा । अभ्सुजन्मर्क्षमित्येकं पदं । असोर्मुख्यप्राणजन्म यस्य सोऽसुजन्मा कोणपो वा मरीचिनामा वा वायुस्तस्यर्क्षं स्वातीनक्षत्रं नृसिंहजयंती नक्षत्रं । सौम्ययागेयुक् बुधयोग युक्तं चेच्छ्रेयः । नृसिंहस्यापि बुधेऽवतीर्णत्वात् । तेऽयनादयः श्राद्धयोग्याः कालाः । एते आषाढीद्वादश्यादयश्चोपवासयोग्या इति द्विविधाः कालाः । श्रेयः कालाः शेषं सुगमं ॥ २३ ॥ २४ ॥ इति श्रीभागवते पंचदशोऽध्यायः ॥ ७–१५ ॥ ॥ ॥ इति श्रीभागवते पांघरी श्रीनिवासाचार्यविरचिते विरोधोद्धारे सप्तमः स्कंधः समाप्तः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ कृतवानिति । अत्र कृतवानित्यादित्रयाणां पदानां संगत्यर्थकवर्तमानकालपदवाचकपदाभावादूनता स्यादित्यतोऽर्थ उच्यते । मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथोऽथेत्यभिधानात् । लक्षणयाऽतीतानंतरिकाद्यतनकालोऽथशब्देन ग्राह्यः । न चेतनमध्ये भाव्यमिति शंक्यं । लाक्षणिकार्थस्य वाचनिकार्थापेक्षयाऽमुख्यतयांऽते निवेशनस्यैव युक्तत्वात् । केचित् । अनागतेऽद्य वेति पाठं कल्पयंति । तथात्वे लक्षणाभावेनास्य शंकितदोषस्यानपगमो हि । अपरे । अद्यातीत इति पठंति । तत्राप्युक्तदोषानिस्तारः । तस्मादुक्तरीत्या बाधाभावः । अतो ॥ अतीते । पूर्वकाले कृतवान् ॥ अथ । अद्य ॥ कुरुते । स्वेच्छया करोति ॥ अनागते । भविष्यत्काले ॥ कर्ता । करिष्यतीत्यन्वेतव्यं ॥ ३ ॥ अथाग्र इति । अत्र कर्माणीत्यत्र यतिभंगो न शंक्यः । तस्य काव्ये दोषावहत्वेऽपि शास्त्रे तदभावात् । भागवतस्य च । शुद्धं भागवतं शास्त्रं पुराणं भागवतं चेति । संभिन्नः शास्त्रपुंगव इति चोक्तेः । शास्त्रत्वात् । इत्थमेव प्रमेयदीपिकायां टीकाकृत्पादैः साधितत्वाच्च । तस्मान्न बाधः ॥१४॥ चतुर्थ इति । अत्र केचित् । तापस इत्यत्र तामस इति पठंति । तदसाधु । हरिस्तापसनामाऽसौ जातस्तपसि वै मनुः । गजेंद्रं मोचयामास ससर्ज च जगत्प्रभुरिति । द्वितीयस्कंधतात्पर्यस्थवाक्ये तापसशब्दस्य निरुक्त्या तद्विरोधेन प्रक्षिप्तत्वनिश्चयात् । न च प्रियव्रतसुतत्वोक्तिविरोधः । तस्मादेव तपसि माघमासे आलोचनकाले वा जात इत्यंगीकारे तदभावात् । प्रमाणवाक्येऽपि मकारस्य सुग्रहत्वेन भवदभिमतसिद्धिरिति चेन्न । आलोचनस्यैव भगवद्व्यक्तिहेतुत्वात् । न तु तिमिरस्याज्ञानस्य वा तृतीयगुणस्य वा । प्रत्युत तदभावाजनकत्वात् । ग्रंथांतरे पकारस्यैव दृश्यमानत्वाच्च । तथा पूर्वार्धांते स्थितमुत्तरार्धं परित्यज्य वृषाख्यातिरित्यादिसार्धश्लोकद्वयांते तत्रापि जज्ञे भगवान्हरिण्यां हरिमेधस इत्यर्धं प्रक्षिप्य तदंतेऽत्रत्यं हरिरित्याहुत इत्यादिमुत्तरार्धं योजयंति । तदयुक्तं । तत्रापीत्यस्याभावात् । कुत्रापि संवादाभावाच्च । ननु प्रतिमन्वंतरं षट्कमुच्यते । तत्र मनोरवतारस्य चैकत्वेन तदनुपपत्तिरिति चेन्न । आद्यमन्वंतरे इंद्रावतारयोरेकत्ववदत्राप्युपपत्तेः । किं च तत्रापीत्यर्धांते हरिरित्याहुतो येन गजेंद्रो मोचितो ग्रहादित्यर्धांगीकारे मन्वंतरेऽपि हरिमेधसो ऋषेः सकाशाद्धरिणीनाम्न्यां भगवान्हरिरिति नाम्ना जज्ञे इति योजनायामपि आहुत इत्यसंगतं स्यात् । न च यच्छब्दान्वये तदन्वेति । येनेत्यनेन सामानाधिकरण्याभावात् । मोचित इत्यनेनापि विषयभेदात् । नापि येन गजेंद्रेणाहुतः स गजेंद्रो ग्रहान्मोचित इति युक्तं । गजेंद्रस्य यत्तच्छब्दोक्तौ विशेषकारणाभावेन निरर्थकत्वात् । यच्छब्दबललब्धतच्छब्दान्वयेऽपि स भगवान्हारिरित्याहुतः सन् जज्ञेत्यन्वयांगीकारे आहुत मोचित शब्दस्थ क्त प्रत्ययस्य भूतार्थकत्वेनाव्हानमोचनानंतरं प्रादुर्भावरूपजन्मायोगात् । आहुत इत्यस्य तृतीयासापेक्षत्वेऽपि तदभावाच्च । न च येनेत्यत्र योज्यं । उक्तोत्तरत्वात् । मोचित इत्यत्रापि भगवद्वाचकतृतीयाध्याहारेण गौरवापाताच्च । किंच हरिरित्याहुत इत्यपि न युज्यते । आव्हानं हि संबोधनापेक्षं । न तु प्रथमापेक्षं । अपि चाहुत इत्यस्यावाहनार्थकताऽपि न घटते । तदर्थकस्य व्हयतेःक्त प्रत्यये आदौ दीर्घतानियमात् । आव्हत इव मे शीघ्रमिति प्रयोगदर्शनात् । तस्मादस्यायमर्थः । उत्तमस्य तृतीयमनोः भ्राता चतुर्थो मनुः तापस इति नाम्ना च आहुतः अव्हानविषयी कृतः प्रख्यात इति यावत् । आसीदिति शेषः । नन्वस्यैव द्वितीयनामप्रवृत्ती किं निमित्तमित्याशंक्य तन्नामप्रवृत्तिहेतुभूतं कृत्यमाह ॥ येनेति । येन हरिनामवता मनुना । ग्राहात् नक्ररूपात्संकटात् । गजेंद्रो मोचितः । अनेन हरति गजेंद्रसंकटमिति विग्रहश्च सूचितो ज्ञेयः । न च हुकारे दैर्घ्याभावदोषः । व्हयतेरनंगीकारात् । किं तु जुहोतेरभ्युपगमात् । न च वाच्यं सोऽत्रानुपयुक्त इति । आङुपसर्गेणाकारणार्थकत्वात् । उपसर्गेण धात्वर्थो बलादन्यत्र नीयत इत्युक्तेः । तर्ह्यतिप्रसंगः स्यादिति चेन्न । प्रसिद्धिबलादन्यत्रानुक्तधात्वर्थ इत्यर्थांगीकारात् । अत्राप्येतस्य कुत्र प्रसिद्धिरिति चेत् । दक्षिणाग्नौ जुहावहीति अनुपसर्गस्य होमार्थकत्वेऽपि द्वैपायनो विरहकातर आजुहावेति आङुपसृष्टस्य तस्यैवाव्हानार्थे प्रसिद्धिदर्शनात् । तस्मादुक्तमुक्तमिति सद्भिः संतोष्टव्यं ॥ २७ ॥ तत्कथेति । यत्र यत्र गजेंद्र मोक्षाद्युपाख्यानेषु तत्कथासु तदाद्युपाख्यानेषु कथाशब्देन ग्रंथग्रहणे कथनप्रशंसाभावेन ग्रंथप्रशंसयाऽत्रानुपयोगो ज्ञेयः ॥ ३२ ॥ इति श्रीभागवतटिप्पण्यां प्रथमोऽध्यायः ॥ ८–१ ॥

॥ हरिः ॐ ॥ **सरित्सरोभिरिति** । अत्र मोदसौरभयोरैक्यार्थात्पुनरुक्तिरित्यतोऽर्थउच्यते । पुलिनैः वालुकाश्रितप्रदेशैः । मणिमयाः रत्नप्रचुराः । वालुका । येषुतैः देवस्त्रीणां । मज्जनेन । स्नानेन । आमोदः सुगंधः । येषां ते । सुराणां पुरुषदेवानामयं सौरः सुरमज्जनामोदस्तेन । भाक्ताः भागयुक्ताः । मिश्रिता इति यावत् । ते च ते । अनिलाः वायवः । तैर्युतः । यद्वा । देवानां स्त्रीणां च मज्जनेन क्रमात् । आमोदसौरभौ । आ अत्यंतं मोद आनंदो यस्मात्स आमोदः । सौरवत् देवमज्जनामोदवद्भातीति सौरभः । इति भिन्नाख्यसुगंधौ । ताभ्यां भाक्तानिलैः । अथवा । देवस्त्रिभिर्मज्यते यस्मिंस्तद्देवस्त्रीमज्जनं तन्नामकं यदुदकं तत्संबंधी यः सौरभः सुगंधः तेन भाक्ता इति । किंवा । देवस्त्रीमज्जनेनामोदो गंधो यस्य स चासौ सौरः । सुरा शब्दस्योदकनामसु पाठात् । अंबुकणगणः तं भजतीति देवस्त्रीमज्जनामोदसौरभाक् तद्भावस्तत्ता तया युक्ता येऽनिलास्तैरिति ॥ ८ ॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥२-२ ॥

॥ हरिः ॐ ॥ **एवमिति** । अत्र मनोहृदीत्यनयोरेकार्थत्वात्संगत्यनुपपत्तिरित्यतोऽर्थांतरं । हृत्स्नेहे च मनःस्निग्धे सुहृद्बंधौ हरावपीति कोशात् । हृदि हरौ । बुध्या मनःसमाधाय । यद्वा । अहृदीति पदं । अस्य विष्णोः । हृदि स्नेहविषये । भक्त्यर्थमिति यावत् माहात्म्यज्ञानपूर्वस्तु स्नेहो भक्तिरितीर्यत इत्युक्तेः । अथवा । मनः । सप्तसु प्रथमेति सूत्रात् । मनसि रुद्रे । इत्यर्थः । सर्वात्मनोंऽतःकरण। गिरित्र इत्युक्तेः । अभिमान्यभिमन्यमानयोरैक्यव्यपदेशाच्च । तत्र बुध्या संबुध्या बुध्यभिमानिन्या वाण्या सहास्त इति बुध्यासो ब्रह्म-तं । आधायहृदि चित्ताधिष्ठातरि ब्रह्मणि परमं विष्णुं आधाय जाप्यं जजापेत्यन्वयः । अत एव ब्रह्मादयो विविधलिंगाभिदाभिमाना नैतो यदोपसस्रुपुर्निखिलात्मकत्वात्तत्राखिलामरवरो हरिराविरासीदिति वक्ष्यति । तस्मान्नार्थैक्यनिमित्तजाऽसंगतिः ॥ १ ॥ नम इति । अत्र चतुर्थीनां नमः शब्देनान्वये धीमहीत्यस्यानन्वयः । अत उच्यते । यतः भगवतः सकाशात् । एतच्चिदात्मकं एतद्दृश्यं जडं चित् चेतनं । तदुभयात्मकं विश्वं । जायत इति शेषः । तस्मै भगवते नमः । धीमहि कुर्महे । धातूनामनेकार्थत्वात् । इति वैलक्षण्यद्योतनायैव छांदसः प्रयोगः । यद्वा । ननु नमसः करयोजनं दंडवत्पात उर आद्यष्टांगैर्भूस्पर्शनं एवमादि साधनत्वे प्रकृते एकस्यैवाप्यसिद्धौ कथं नमो युज्यत इत्यत आह ॥ यत इति । यतः तसेः सार्वविभाक्तिकत्वात् । यस्य भगवतः । चिदात्मकं सर्वचेतनस्वामिकं । स्वरूपं । यद्धीमहि ध्यायामः । एतदेव ध्यानमेव । तस्मै भगवते नमो ज्ञेयं । अतो नानन्वयः । अत्र केचित् । पुरुषायाभिधीमहीति पठंति । तच्चिंत्यं । टीकाकल्पैर्विजयध्वजतीर्थैर्हि शब्दस्य व्याख्यातत्वात् । अथवा । हे आय अतिशयित ज्ञान । येति ज्ञानं समुद्दिष्टमिति भागवततात्पर्योक्तेः । हे पुरुष पुरुषत्व धर्मवान् । परेशा ब्रह्मादिस्वामिनी रमा । यतो यतः कारणात् । इबीजाय । इदं शब्दस्य इमित्यादेश इति



ऋग्भाष्ये इंद्र शब्दनिरुक्तौ टीकाकृत्पादैर्व्याख्यत्वात् । विश्वव्यक्त्या इत्यर्थः । स्वकामव्यंजकाय वा । इ विचित्रे स्मरे पुमानिति हि यादवः । तस्मै तुभ्यं भगवते नमो विधायेति शेषः । आयात् उपागमत् । अत एतच्चिदात्मकं उदरस्थस्थावरजंगमं त्वां वयं धीमहि । बहुवचनेन करेण्वादयोऽपि ध्याने सहाया आसन्निति गम्यते ॥ २ ॥ **एवमिति** । अत्राविरासीदित्युक्तं । उत्तरश्लोकेत्वागमादित्युक्तं । आविर्भावो नामहि एकत्र स्थितस्य तिरोहितस्य दर्शनयोग्यत्वं । गमनं नाम स्थलांतरप्राप्तिः । अत उक्तिद्वयेन विरोधोऽतोऽर्थ उच्यते । अविविधलिंगाभिदाभिमानाः । अस्य विष्णोः । विविधलिंगानि नानारूपाणि । तेषां । भिदाः विशेषाः । तेषु । अभितः सर्वतः । मानः आदरो । येषां ते ब्रह्मादयः । एवं उक्तप्रकारेण वर्णितः । निर्विशेषः न विशेषः आधिक्यं यस्मात्कुत्रापि स निर्विशेषो विष्णुः । येन तं गजेंद्रं प्रति एता आगंता ना मन्वंतरनियंता तापसाख्यः परमः पुरुषः । इयदित्यव्ययं । एतावज्ज्ञानेनेत्यर्थः । अ उपससृपुः नाजग्मुः । अमानोनाः प्रतिषेध इत्युक्त्या अंत्यानाभिवाधस्याप्यर्थे पदपार्थक्ये च साम्यात् । तत्र तस्मिन्मन्वंतरे । यो हरिः तापसाख्यो भगवान् । उभयनाम्नोरेकार्थत्वात् । हरति दुःखमिति हि हरिः । तापं दुःखं स्यति नाशयतीति तापसश्च । षोंतकर्मणीति धातोः । आविरासीत् प्रादुर्भूतः स एव तत्रागमदित्युत्तरेणान्वयः । यद्वा । हरिरिति हरिशब्दवाच्य आविरासीत् । अथवा । यदा यस्मिन्मन्वंतरे । निखिलात्मकत्वात् सर्वमन्वंतर स्वामित्वात् । नानरि मन्वंतरप्रणेतरि । भगवति तापसाख्ये । सर्वार्थाप्रथमा यस्मात्सप्तम्यर्थाततोमतेति भाष्योक्त्या सप्तम्यर्थकत्वात्प्रथमायाः । अखिलामरेभ्यः सर्वदेवेभ्यो वरः श्रेष्ठो हरिरिति शब्द आविरासीत् । तत्र तस्मिन्मन्वंतरेऽपि उक्तगुणा ब्रह्मादयो गजेंद्रं प्रति गजेंद्रमुद्दिश्येत्यर्थः । एते आगमने विषये । इण् गताविति धातोः । एवमुक्तरीत्या निर्विशेषं सर्वोत्तमं भगवंतं । यदा यस्मिन्काले । उपससृपुः उपसर्प्य प्रार्थयामासुः । अत एव दिविजैः सह संस्तुवद्भिरिति वक्ष्यति । तदा गजेंद्रसमीपमगमदिति । अत आविर्भावागमनयोर्न विरोधः ॥२८॥ इति श्रीभागवतटिप्पण्यां तृतीयोध्यायः ॥८-३॥ ॥ ॥ इति श्रीभागवते पांघरीश्रीनिवासाचार्यकृते विरोधोद्धारेऽष्टमः स्कंधः समाप्तः ॥ ८ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥



॥ हरि ॐ ॥ श्रीमद्धनुमद्भीमध्वांतर्गतरामकृष्णवेदव्यासात्मक लक्ष्मीहयग्रीवाय नमः ॥ **नाभाग इति** । अत्र नाभाग शब्दस्य

नभगापत्यमिति निर्वचनांगीगारे आद्यवर्ण एव वृध्द्या भवितव्यं । न तु द्वितीये । प्रायः सर्वत्र तथा दृष्टत्वात् । अत्र तु द्वितीये भा-वर्णे वृद्धिदर्शनेन प्रयोगस्यासाधुत्वं स्याद्यतोऽर्थांतरं । नभगापत्यं नभगपुत्रो नाभागो नाभागनामा । नात्र नाभाग शब्दस्य प्रवृत्तिनिमित्तं नभगपुत्रत्वं । येन प्रयोगस्यासाधुत्वं स्यात् । किंतु इदं नाभागः न भागो दायविभागो यस्य सोऽभागः अभागो न भवतीति नाभागः । नात्र नञ् समासः । किंतु नाकशब्दवत् न समासः । अतोऽनभाग इति प्रयोगाभावः । द्वौ नञौ सातिशयं प्रकृतमर्थं गमयत इति न्यायेन पितुर्दायवद्भोगसाधनत्वाभावेऽपि रुद्रप्रसादजन्यज्ञानसाहित्येनांगिरः सत्रगधनप्रायकत्वेन भोगसाधकत्वाद्भागत्वेन दत्तत्वाद्भ्रातृणां मोक्षप्रापकज्ञानलाभाभावाच्चास्यैवातिशययोपपत्त्या भागित्वरूपप्रकृतार्थगमकत्वेन च प्रयोगस्य साधुत्वादिदमेव प्रवृत्तिनिमित्तं ज्ञेयं । एतदेव विवृणोति ॥ यमिति ॥ यं । आगतं । गुरुगृहादिति शेषः । नाभागं भ्रातरं प्रति तं पितरं दायं दायत्वेन व्यभजन् । भ्रातर इति पाठे तत्पदं कर्तृत्वेन योज्यं ॥ १ ॥ इति श्रीभागवतटिप्पण्यां पंचमोऽध्यायः ॥ ९-५ ॥

हरि ॐ ॥ होमवेलामिति । अत्र रेणुकायास्तन्महात्म्ये पार्वत्यंशत्वमुच्यते । तदा तस्याश्चित्ररथगंधर्वस्पृहोक्तावनर्थ प्रसंगेन विरोधोऽतोऽस्यार्थांतरमुच्यते । चित्रं हि लोकविलक्षणमुच्यते । अतस्त्र्यक्षत्वादिलोकवैलक्षण्येन चित्र आश्चर्यरूपो रथो देहो यस्य स चित्ररथो रुद्रः । शरीरं रथमेव चेति श्रुतेः । तस्मिन् स्पृहा कामना यस्याः सा अप्सरो गंधर्वक्रीडादर्शनेन स्वभर्तृरुद्रासक्तचित्ताऽभूदिति भावः । अतः किंचित्कालं होमवेलां न सस्मारेत्यर्थः । यद्वा । रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते इत्युक्तेः । स चासौ रथश्चेति कर्मधारयः तस्मिन् रथे स्पृहा । क्षत्रकुल एव वैभवादेतादृशरथप्राप्तिर्न तु विप्रकुले । एवं लक्षणा वासना यस्याः सा । अथवा । न किंचित्स्वल्पमपि चित्ररथे गंधर्वे स्पृहावती आसीत् । किंतु होमवेलां सस्मारेत्यर्थः । किंवा । चित्रारतिर्यस्य स चित्ररो रुद्रस्तस्मिंस्तिष्ठतीति चित्ररथा तथा विद्यास्पृहा यस्याः सा । पृषोदरादित्वात्सलोपः । उत वा । चित्रः शबलवर्णमेभ्यो वाहनं यस्य तस्मिन्नग्नौ चित्रास्तंत्रसारोक्तदिशाऽनेकवर्णो गरुडो रथो वाहनं यस्य तस्मिन्विष्णौ वा स्पृहा भक्तिर्यस्याः सा रेणुका होमवेलां किंचित्स्वरूपं न सस्मार किंतु पूर्णं सस्मारेति । अन्यथा तत्काले गमनायोगादिति ॥ ३ ॥ इति श्रीभागवतटिप्पण्यां चतुर्दशोऽध्यायः ॥९-१४॥ इति श्रीभागवते पांघरी श्रीनिवासाचार्यकृतविरोधोद्धारे नवमः स्कंधः समाप्तः ॥ ९ ॥ ॥ श्रीकृष्णार्पणमस्तु ॥

॥ हरिः ॥ ॐ ॥ अथेति । अत्र कालस्य सामान्येन परमशोभनत्वमुक्तं । तदयुक्तं । कंसादिभ्योऽशोभनत्वात् । अतो विरोधः । तस्मादर्थांतरं । अथसर्वगुणोपेत इत्येकं पदं । नास्ति थं अन्नं यस्य सोऽथः । यस्मादन्नं थमुच्यते इति कौर्म्ये । निरशनो भगवानित्यर्थः । अनश्नन्नन्योऽभिचाकशीतीति श्रुतेः । अन्यो निरन्नोऽपि बलेन भूयानिति स्मृतेश्च । तं सरंति जानंति ते सर्वाः । सृगतौ ततो वः । गत्यर्थानां च ज्ञानार्थत्वात् । अनुसरंतो वा । तेषां गुणोपेतः सुखकारक इत्यर्थः । यद्वा । अथ भगवदवतारारंभ एव । सर्वान्प्रति गुणोपेतोऽपि कालः ॥ परं । शत्रुं प्रति । अशोभनः । आसीदिति शेषः । परं अत्यर्थं । अशोभनः कालः । अपेतः परावृत्तः । किंतु । सर्वगुणः सर्वगुणा एव यस्मिन्स तथा । अभूदिति शेष इति वा ॥ अजानत् । विष्णोः । जन्म यस्य तस्य ब्रह्मणः ॥ ऋक्षः । रोहिणीनक्षत्रं ॥ यर्हि । यस्मिन्समये । स कालः सर्वगुणोपेत इति योजना । यद्वा । अजनजन्म जनविलक्षणस्य जन्मरहितस्य वा भगवतो जन्मऋक्षं । ऋकारो देवमाता स्यादित्येकाक्षरात् । ऋशब्दवाच्या दितिरूपदेवकी क्षं क्षेत्रं यस्य तत् । क्षःक्षेत्रे राक्षसे क्षये इति वररुचिकोशात् । क्षा भूमिर्यस्य वा । क्षा शब्दस्य पृथिवीनामसु पाठात् । देवक्यां भगवज्जन्म यदासीदित्यर्थः ॥ यर्ह्येव । यदैव । आसीत्तदा कालः ॥ शांतर्क्षग्रहतारकोऽभूत् । शांताः प्रसन्नाः । ऋक्षाणि अश्विन्यादीनि । ग्रहाः सोमादयः । तारका अन्य भानि । यस्मिन्काले सः । यर्हि यदा । एवं कालः । तदा दिशः प्रसेदुरित्यादिरन्वयः । यद्वा । अथ शब्दावृत्तिः कार्या । तथा च । यर्हि यदा । अथ सर्वं । अथ मंगलं । मंगलानंतरारंभप्रश्नकार्त्स्न्येष्वथोऽथेत्यमरः । तदा कालः सर्वगुण इति योजना । केचित् । शांतर्क्षग्रहतारकमिति पाठं कल्पयित्वा ऋक्षविशेषणत्वेनोत्तरचरणं च शांता ऋक्षादयो यस्मिंस्तदिति बहुव्रीहिणा योजयंति । तच्चिंत्यं । ऋक्षादेस्तच्छांतत्वस्य वा रोहिण्याश्रयत्वानुपपत्तेः ॥ १ ॥ दिश इति । अग्रे मंदमंदं जलधरा जगर्जुरिति सद्भावात् । अत्र निर्मलोडुगणोदयमिति विरुद्धं । अतोऽर्थांतरं ॥ निर्मलः । निर्दोषः ॥ उडुगणोदयं । लग्नं । यस्मिन्गगने तत् । उडूनां गणः अनेकत्वं यस्मिंस्तद्राशेः उदयो लग्नमिति विग्रहः । राशीनामुदयो लग्नमित्यमरः । यद्वा । निर्मलः तिमिररहितः । उडुगणोदयः रोहिण्यादिनक्षत्रोदयः । यस्मिन्निति । चंद्रोदयाभावेन तत्तिथौ कृत्तिकांतानामुडूनां तमस्युदयेऽपि रोहिण्यादीनां चंद्रोदयसद्भावान्न तमस्युदय इति भावः । अथवा । निर्मलः पुण्यरूपः । यः । उडुगणः

बभूवेति । स्वरोचिषा भारत सूतिकागृहं विरोचयंतमिति वक्ष्यमाणत्वात् । अथवा । जनार्दने । जन हिंसायां । जायमाने जायं-
मानायां सत्यां तमसोत्कृष्टे निशीथे आविरासीदिति । यद्वा । अजा कालशक्तिः । यमः अंतकः । ताभ्यां सकाशात् । एजनं
कंपः । एजृ कंपने । भयमिति यावत् । येषां तेभ्यो असुरेभ्यः सकाशात् । अर्दने पीडने । भूते जाते सति । यदा तु सतां ।
उत् उत्कृष्टं । तमः ग्लानिः । बभूव । तत्सु ग्लानौ । तदा निशीथे आविरासीदिति । अपि वा । अजायमाने जनानामसुराणा-
मर्दने हिंसाविषये तम उद्भूते निशीथे आविरासीदिति । जनार्दने जनपीडके तमसोत्कृष्टे निशीथे जायमाने सतीति वा । उत वा ।
उद्भूते उत्कृष्टभूते जीवजात इत्यर्थः । जडस्यापि भूतशब्दवाच्यत्वात्तद्व्यावृत्तये विशेषणं । जडस्य जीवापकृतत्वात् । स्वापायोगाच्च ।
निशीथेन निमित्तेन इता गता । इण् गताविति धातोः । मा ज्ञानं यस्य तादृशे सति निशीथे । सर्वजीवेषु सुप्तेष्वित्यर्थः । आत्
वासुदेवाज्जन्यत इति अजनो ब्रह्मा । अकारो वासुदेवः स्यादित्येकाक्षरः । यो ब्रह्माणं विदधाति पूर्वमिति श्रुतेश्च । तस्य ।
अर्दने याचने जायमाने सति च । आविरासीदित्यन्वयः । अहो स्वित् । जन्यंते ते जनाः । प्रकरणाद्देवकीपुत्राः । तेषां । अर्दने
हिंसने । भूते जाते सति । निशि प्रलये । इ विचित्रं विश्वं थं अन्नं यस्य तादृशे भगवति । प्रलये विश्वोपसंहारक इत्यर्थः । यस्मादन्नं
थमुच्यत इति कौर्म्ये । उत् ऊर्ध्वे । षट्गर्भहिंसानंतरमित्यर्थः । जायमाने सति दुर्गादेवी यदा बभूव तदा आविरासीदिति ।
सर्वाधिकत्वेन तमो हि दुर्गा इत्यौद्दालिकायनश्रुतिः । दुर्गेति भद्रकालीतीति च । या योगमायाऽजनि नंदजाययेति वक्ष्यमाणत्वात् ।
ग्रंथबाहुल्यभिया विस्तरेणालमिति सद्भिः संतोष्टव्यं ॥ ८ ॥ अथोत्तरत्र पादचतुष्टयार्थोऽपि लिख्यते । यथेवेत्युपमाद्वयवैयर्थ्य-
निरासार्थं । यथा प्राच्यां दिशि पुष्कल इंदुः प्रादुरासीत्तथा देवक्यां विष्णुः प्रादुरासीत्तथा प्राच्यामिंदुः प्रादुरासीदिति परस्पर
प्रमेयत्वप्रदर्शनार्थमुपमाद्वयं । यद्वा । यथा शब्द उपमार्थः । इव शब्द उत्प्रेक्षार्थः । तथाहि । इंदोः कृष्णाष्टम्यामुदितत्वेन
पूर्णकलात्वाभावात्पुष्कल इत्युत्प्रेक्षितेंदुर्यथा प्राच्यां तथा देवक्यां विष्णुरित्यनेनोत्प्रेक्षणेन तद्दिने चंद्रस्यापूर्णकलात्वेन पूर्णावतारत्वेन
च भगवतश्चंद्रोपमानयोग्यत्वं नास्तीति ध्वनितं । अथवा । यथा विष्णुश्चतुर्भुजत्वादिगुणोपेतस्तथैव सन् प्राच्यामिंदुरिव देवक्यां
प्रादुरासीत् । चतुर्भुजं शंखगदाद्युदायुधमिति वक्ष्यमाणत्वात् । न प्राकृतशिशुवदिति भावः । उत वा । स्ववंशे भगवदवतारेण

तद्दिनेऽपूर्णकलोऽपि चंद्रो यथा यथावत्पुष्कलः पूर्णकल इंदुरिव विष्णुर्देवक्यां प्रादुरासीदिति । किंवा । यथा सर्वगुहाशयस्तथैव भूत्वेंदुरिव देवक्यां प्रादुरासीत् । हरेर्देवक्युदराद्बहिः प्रादुर्भावेऽपि तदुदरं विष्णुव्याप्तिहीनं नासीदिति भावः । अहो स्वित् । इव पुष्कल इत्येकं पदं । इ विचित्रे स्मरे पुमानिति यादवकोशात् । इ शब्दवाच्यो मदनस्तत्सदृशं वपुः शरीरं कलयतीति स तथा । दग्धशरीरमदनं वपुषा कलयति बंधयतीति स तथेति वा । कल बंधन इति धातुः । अपि वा । इंदुरिव किंचित् चंद्रोऽल्पकलावानित्यर्थः । प्रादुर्बभूव । विष्णुस्तु यथावत्पुष्कलः प्रादुरासीत् । एककाले उभयोः सत्यपि जन्मनि न साम्यमिति भावः । किंचित्वे चोभयत्वे च संशये सदृशे तथा । इव शब्दः प्रयुज्येत न्यक्कारेऽपि च पंडितैरिति शब्दनिर्णये । यद्वा । यदा विष्णुर्देवक्यां प्रादुरासीत्तदा पुष्कलोऽपि चंद्र इव न्यक्कृतस्तिरस्कृत इति यावत् । अथवा । इ वपुः कलः इति पदद्वयं भगवद्विशेषणं । इ वपुः विंचित्रशरीरः । शुक्रशोणितसंबंधविधुरशरीर इत्यर्थः । तमद्भुतमिति वक्ष्यमाणत्वात् । अत एव प्रागुदितचंद्रदृष्टांतः । चंद्रस्य प्रागुदयेऽपि शुक्रशोणितादिराहित्यं । एवं देवक्यामुत्पन्नत्वेऽपिशुक्रशोणितादिराहित्यं भगवत इति भावः । कलः कं सुखमेव लाति आदत्ते स तथा । ला आदान इति धातुः । आनंदस्वरूप इत्यर्थः । इदमेवालौकिकशरीरत्वे हेतुरपीति । तस्मान्नात्र पुनरुक्तादिदोषगंधोऽपीति भावः ॥ ९ ॥ एवमिति । अत्र भद्रे इत्येकवचनं संबुद्धौ सत्यां वां तप्यतोरिति द्विवचनेन विरोधोऽत उच्यते । मातापित्रोर्मध्ये मातुरपत्यकृते परमश्रमप्राप्त्या मातृदेवो भवेति श्रुतावपि मातुरेव पूर्वग्रहणाच्चात्रापि देवक्या एवाव्यवहितस्तुत्या वसुदेवस्य निर्व्यूहमानां निहनिष्यसे चमूमित्युक्त्या भावाभावेन स्वयमेव सन्मुखत्वाद्देवक्यास्तु समुद्विजे भवेद्धेतोः कंसादहमधीरधीरित्युक्त्या स्त्रीजात्याच सभयत्वदर्शनात् । अतिकृपया देवक्या एव संबुध्या तामेव संमुखीकृत्योभौ प्रति भाषणं । अतो न विरोधः । यद्वा । भद्रे स्वकल्याणविषये परमं दुष्करं तपस्तप्यतोर्वां युवयोरिति योजना । अग्रेऽनघे इत्यत्रापि पापाभावे इत्यर्थो ज्ञेयः । अथवा । मातापित्रापरपर्यायतीर्थे शब्दविवक्षया भद्रे अनघे इति नपुंसकसंबुद्धिद्विवचनप्रयोगः । अतो न विरोधः ॥ ॥ ३७ ॥ तयोरिति । अत्र तयोर्वामित्यनयोरन्वयानुपपत्तिः । न चादितिकश्यपयोर्विशेषणत्वेन योजना । सप्तमीपंचमीभ्यां सामानाधिकरण्यानुपपत्तेः । नापि वां सकाशात् अहं पुनरेवासमिति योजना । अदितिकश्यपपदयोरसंगतत्वप्रसंगात् । तयोरेवैताभ्यां



विवरणमिति चेन्न । तच्छब्देन प्रश्निसुतपसोर्ग्रहणेनादित्यादेर्ग्रहणायोगात् । तयोरेव तद्रूपतांगीकारेऽहं कश्यपाददित्यामास युवामेवादितिकश्यपौ जाताविति भावः । सत्तार्थकास धातोः कर्तरि लिडुत्तमपुरुषैकवचनरूपं । ननु ब्रह्ममानसपुत्रमरीचिपुत्रत्वात्कश्यपस्य सृष्ट्याद्यभाग एव जन्मनः श्रुतत्वात्तत्काले सुतपसोः श्रुतत्वात्कथं सुतपसः कश्यपजन्म युज्यते इति चेन्न । पूर्वकल्पे यः सुतपा नामप्रजापतिः स एवास्मिन्कल्पे कश्यपो जात इत्यंगीकारात् । न च पूर्वकल्पेऽपि एवं विधः कश्यप आसीदेवेति वाच्यं । तत्पूर्वकल्पीयसुतपसोऽभ्युपगमात् । सृष्टेर्यथा पूर्वस्य श्रुतिसिद्धत्वात् । तस्मान्न क्षुद्रशंकावकाशः ॥ ४३ ॥ युवामिति । अत्र पुत्रभावेन चिंतयतो भगवद्गतिप्राप्तिरुक्ता । तन्न युज्यते । ममताज्ञानयोः सद्भावेन विरुद्धत्वादर्थांतरं । उपमायां विकल्पे वेत्यमरोक्त्या वा शब्दस्योपमार्थकत्वात् । सर्वं वस्तुतः पुत्रस्याधिकप्रेमास्पदत्वात्पुत्रभावेनेव ब्रह्मभावेनासकृन्मां चिंतयंतौ युवां परां मद्गतिं यास्येथे गमिष्यतः । चिंतनमपि द्वेषभक्तिभ्यामसकृद्भवति । तत्र द्वेषादैत्यानामिव मद्गतिप्राप्तिरिति सूचयितुं कृतस्नेहावित्युक्तं । अतो न कश्चिद्विरोधः ॥ ४६ ॥ पित्रोरिति । अत्र प्राकृत इत्युक्तस्य पुरुषः प्रकृतेः पर इत्यनेन विरोधोऽतोऽर्थांतरं । प्राच इव पूर्वबालमुकुंदवत् कृतं शयनकर्म यस्य तादृशः शिशुर्बालो बभूवेत्यर्थः । अथवा । अत्रोपमालोपेन प्राकृतवदित्यर्थः । अतो न विरोधः ॥ ४७ ॥ मार्गं ददौ सिंधुरिव श्रियःपतेः । अत्र श्रियःपति शब्देन दाशरथेर्ग्रहणं न संभवति । श्री शब्दस्य सीतावाचकत्वेऽनुशासनाभावात् । न च श्रीसीतयोश्चैतन्याभेदेन युक्तता । कीर्त्यादीनामपि तदभेदाद्वामनादीनामपि ग्रहणापातात् । नापि समुद्रेण मार्गदानं तत्रैव युज्यत इति । विप्रगुरुपुत्रानयनवेलायां कृष्णायापि समुद्रेण मार्गदानात् । तस्माद्रामार्थकत्वे श्रियः पति शब्दस्य न निश्चय इत्यत उच्यते । त्रिभुवनजयलक्ष्मीर्मैथिली तस्य दारा इति नाटकेऽनुशासनसद्भावात् श्रीः सीतेति युज्यते । यद्वा । पतेरित्यावृत्त्या योज्यं । समुद्रस्य सरित्पतित्वेन यमुनापतित्वे सिद्धेऽपि । पतेः । स्वपतेः । अनुसारेणेति शेषः । श्रियः स्वकन्यायाः लक्ष्म्याः । पतेः भगवतः । पारिबर्हरूपं स्वयमनुस्मृत्य मार्गं ददाविति समुद्रेण स्वकन्यायां दत्तायां तदनुस्मृत्येदानीं पारिबर्हरूपमार्गदानं यमुनया कृतमिति भावः । अथवा । कालिंदीति समाख्याता वसामि यमुनाजल इति कालिंद्युक्तेः । पू पूरेण सिंधुरिव वर्तमानाऽपि यमुना स्वाश्रितस्वाच्छ्रीनाम्न्याः स्वानुजायाः कालिंद्याः पतेः भविष्यभर्तुर्लज्जयेति शेषः । मार्गं ददौ । स्त्रीजाति-

मत्याः स्वशालागमने स्वोद्धत्यप्रदर्शनं न न्यायमिति मत्वा लज्जया संकुचितत्वेन मार्गदानमर्थसिद्धमिति भावः। शालकत्वस्य भविष्यत्कत्वेनार्थवैलक्षण्यद्योतनायैव पतेरिति वैलक्षण्यप्रयोगः कृतः। अन्यथा पत्युरिति युक्तं स्यात्। सा सूर्यपुत्री यमुनानुजाता तपश्चरंती कृष्णपत्नीत्वकामेति हि तात्पर्यनिर्णये ॥ ५१ ॥ इति श्रीभागवते चतुर्थोऽध्यायः ॥ १०—४ ॥ ॥

॥ हरिः ॐ ॥ इतीति। अत्र बाहुनामेति पाठः साधु। तस्य स्त्रियां ङीषोऽपेक्षितत्वात्। अतोविरोधस्तस्मादुच्यते। बहून् अनेकान्नामयति प्रव्हीकरोतीति बहुनामा तस्याभिधानार्थकत्वे ङीषोऽपेक्षितत्वेऽपि प्रव्हीभावार्थकत्वे टापोऽपि युक्तत्वात् न बहुनाम्नीति पाठस्यावश्यकत्वमित्यर्थः। यद्वा। बहुनामेति क्रियाविशेषणं। बहूनाम यथास्यात्तथा आबभूवेत्यर्थः। अथवा। बहुना दुर्गाभद्राकालीत्याद्यनेकनामविशेषेण। अमा सह। बभूव। अमा सह समीपे चेत्यमरः। बहुमाने सहवा। अपि वा। मःशिवो मा रमायां चेति विश्वात्। मा रमा बहुनामा निकेतेषु बहूनि त्रीणि नंदभीष्मसत्राजिदिति नामानि येषां तेषां निकेतेषु गृहेषु दारेषु वा बहुना योगनिद्रा रुक्मिणी सत्यभामेत्यादिरूपत्रयेण। अपर्यवसितबहुत्वस्य त्रित्वेपर्यवसानमिति न्यायात्। पूर्णरूपेण वा। बहुः पूर्णतायामित्युक्तेः। भुवि बभूव। श्री भूदुर्गेति त्रीणि रूपिणी रमा त्रिरूपैर्भगवत्सेवार्थमवतीर्णा बभूवेति भावः। कृष्णजन्मकाले रुक्मिणीसत्यभामयोरवताराभावेन लिटोऽनुपपत्तिरिति चेन्न। वक्तुः शुकस्य कथनसमयात्पूर्वमेवतिसृणामप्यवतीर्णत्वात्। तस्मान्न प्रयोगासाधुत्वं ॥ १३ ॥ अत्र केचित् पुरुषाद इवापत्यामिति पाठं कल्पयंति। तदयुक्तं। कर्त्रोर्वैयधिकरण्यापातात्। न चात्रापि वचनासाम्यं। तस्यान्वयानुपपत्त्यभावेनादोषत्वात् ॥ २३ ॥ क्षमध्वमिति। अत्रैतत्पद्यपूर्वार्धे देवकीवसुदेवयोः क्षमापनांगीकारे तयोर्द्वित्वेन क्षमध्वमित्यादिबहुवचनानुपपत्तिः। न च तयोर्बहुमानार्थं तदिति वाच्यं। मा शोचतं महाभागावित्यत्र तदभावेनात्रैव तदंगीकारस्य नियामकाभावात्। किंच स्त्रीपुंसयोरुच्चारणे स्त्रीपूर्वकस्यैव दृष्टत्वात्। श्यालशब्दस्य चानल्पमात्रकत्वात् श्यालस्वस्रोरिति कथं। अपि च। श्याल शब्दस्य भार्याभ्रातृवाचकत्वेन भगिनीभर्तुर्भीमशब्दवाच्यत्वेन च वसुदेवस्यच भार्याभ्रातृत्वाभावेऽपि कथं श्यालशब्दवाच्यत्वं। अतोऽनेकविधविरोधोऽत उच्यते। ननु आवयोस्त्वद्दुरात्मतासहनेन शोकाभावेऽपि बाधकस्य दुःखमजानतस्तव बाध्यानामस्मत्पुत्राणां षण्णां-

मृतिजन्यदुःखमापकत्वात्कथं ते तव दुरात्मतां सहेयुरिति चेत् । तानेव क्षमापयामीत्याशयेन तान्स्वमनस्यभिमुखीकृत्याह ॥ क्षमध्व-मिति । हे साधवः । परदुःखमसहमानाः । अत एव दीनवत्सलाः । हे देवकी पुत्रा मम दौरात्म्यं क्षमध्वं । यतोऽहमिति शेषेणा-श्रुमुख इति योज्यं । पूर्वजन्मकालिकः पितेत्यर्थः । पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकी-र्तिता इति ब्राह्मोक्तेः । अतोऽनेन तेषां क्षमापनेन स्वपितृत्वमेव हेतुरुक्तो भवति । तदुक्तं । मरीचिजाः षण्मुनयो बभूवुस्ते देवलं प्राहसन्कार्श्यहेतोः । तच्छापतः कालनेमिः प्रसूतावध्यतार्थं तप एव चक्रुः । धाता प्रादाद्वरमेषां तथैव शशाप तान्क्ष्मातले संभ-वध्वं । तत्र स्वतातो भवतां निहंतेत्यात्मान्यतो वरलिप्सून्हिरण्यः । इति तात्पर्यनिर्णये । श्यालः वसुदेवभार्या । भ्राता कंसः । इत्युक्तप्रकारेण पुत्रप्रकारेण क्षमापनमुक्त्वा वसुदेवं समाधत्ते ॥ स्वस्रोरिति । अत्र श्यालस्वस्रोरित्युक्तं । तदसाधु । पुंस्त्रीद्वंद्वे स्त्रीवाचकशब्दस्य पूर्वनिपातनियमात् । स्वसृ शब्दापेक्षया श्याल शब्दस्य मात्राधिक्याच्च । न च स्वसुः सकाशात् श्यालस्य पुरुषत्वेनाभ्यर्हितत्वात्पूर्वनिपातः । सर्वत्रापुरुषस्याभ्यर्हितत्वेन कुत्रापि स्त्रियाः पूर्वनिपातायोगात् । तस्माद्विरुद्धमत उच्यते । प्रथमांत श्यालशब्देन कंसः कर्तोच्यते । स्वस्रोः स्वां भगिनीं सरणशीलत्वेन स्वसुर्वसुदेवः स्वा आत्मसंबंधित्वाद्भगिनी । सृ गतौ ताच्छी-ल्यार्थादुनस्तथेत्यनुव्याख्याने । यद्वा । स्वात्मानं स्त्रावयति अधःपातयति स तथा । अत्रांतर्णिच् । तस्य वसुदेवस्य । पादाव-ग्रहीदित्यन्वयः । भगिन्यर्थकस्वसृशब्दांगीकारे एषा तवानुजा बालेति वसुदेवोक्त्या देवक्याः कंसानुजत्वसिध्या तत्पादग्रहणे महान्विरोधः प्रसज्येत । किंच श्यालस्वस्रोरिति द्विवचनांगीकारे पादाविति द्विवचनमयुक्तं । उभयोश्चतुष्पादसिद्धेः । यद्वा । पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्तिता इति ब्राह्मोक्त्या स्वपित्रादीनामश्रुमुखसंज्ञयाऽत्राश्रुमुख इत्येकवचनेन पितुरेव ग्रहणसिद्धेः । अश्रुमुख इति प्रथमायाः सप्तसु प्रथमेति सूत्रेण षष्ठ्यर्थकत्वात्पितुः स्वसृत्वेन स्वस्य च स्वसृ-त्वेन पितृष्वसा च स्वस्वसा च स्वसारौ तयोरित्युभयस्वसृविवक्षया एकस्यैव द्विवचनोपपत्त्या देवक्या इत्येवार्थः । तदुक्तं । बभूव गंधर्वमुनिस्तु देवकनामास्य तस्मादजनिस्म देवकी । अन्याश्च या कश्यपस्य भार्या ज्येष्ठां तु तामाहुक आत्मपुत्रीं । चकार तस्मात्त्वि पितृष्वसा । स्वसाच कंसस्य बभूव देवकीति तात्पर्यनिर्णये । किंच अहो भगिन्यहो भामेत्युक्त्या भगिनीभर्तुर्भाम-

शब्दप्रयोगेणैव स्त्रीभ्रातुः श्याल शब्दप्रयोगसित्धेः । अत्र श्यालः कंस इत्यर्थः । तथा च । श्यालः कंसः । अश्रुमुखः स्वपितुः स्वसृत्वात् द्विवचनविषया एव स्वस्रोर्देवक्याः पादावग्रहीत् । पितृष्वसृत्वसंबंधेन पादग्रहणे दोषाभाव एव । अतो न किंचन शब्दप्रयोगासाधुत्वं ॥ २३ ॥ भ्रातुरिति । अत्र देवकीवसुदेवश्चेति कर्तृसमुच्चयपक्षे ल्यबंतक्रिययोरेककर्तृकत्वनियमात् भ्रातुर्वचन-माश्रित्येत्यनेन वसुदेवस्यापि कंसभातृत्वापातोऽत उच्यते । देवकी । भ्रातुः कंसस्य । वचनमाश्रित्य । क्षांत्वा क्षमां कृत्वा । रोषं व्यसृजदित्येकोऽन्वयः । अन्यस्तु । वसुदेवश्च प्रहस्य तमुवाच हेति । यद्वा । देवकीति षष्ठ्यर्थे । वसुदेवः क्षांत्वा देवक्या भ्रातुर्व-चनमाश्रित्य रोषं व्यसृजत् प्रहस्य तमुवाचेत्येक एवान्वयः ॥ २५ ॥ कंस इति । अत्र कंसो देवकिवसुदेवाभ्यां विशुद्धं प्रति-भावितः सन्निति योजनायां भ्रातुर्वचनमाश्रित्येति श्लोके एकवसुदेवभाषणांगीकारेण विरोधोऽत उच्यते । एवं विशुद्धं प्रतिभा-षितः कंसः प्रसन्नाभ्यां देवकीवसुदेवाभ्यामनुज्ञातः सन् गृहमाविशदित्यन्वयः । देवक्यादितृतीयान्वयस्तु अनुज्ञातपदेन प्रतिभा-षितपदे तत्र वसुदेवेति शेषः । अतो न विरोधः ॥ २८ ॥ रहोजुषेति । अत्र शंभुना वावनौकसेत्यनेन मंत्रिकृतं रुद्रहेलनं कथं श्रुतं । कंसस्य तद्भक्तत्वात् । रुद्रपरमभक्तजरासंधजामातृत्वात् । विशंसतु पशून्मेध्यान्भूतराजाय मीढुषे इत्याज्ञापनाच्च । अतो विरोधस्तस्मादुच्यते ॥ रहोजुषेति । हरिहेलनं श्रुत्वा कंसः शंकते । न केवलं हरी रहोजुट् किंतु जलस्थोऽपि । महोदधिशयोंऽतक इत्युक्तेः । लोकरूढ्याऽस्माकं जले दृश्यत इति भावः । तत्र मंत्रिभिरनूद्योत्तरितं ॥ वनौकसेति । यद्यपि जीवनं भुवनं वनमिति कोशाज्जलाश्रयत्वं । तथापि शंभुनावेत्यनेन शंभुः नौः तरणसाधनं यस्य तेनेति । अनेनास्माकं प्रीतिकृत् शंभुस्तारयेन्नास्मदप्रिय-मिति सूचितं । अतो जलस्थस्यापि हरेर्जलतरणे स्वातंत्र्याभावात्तेन किं भयमस्माकमिति भावः ॥ ३६ ॥ मूलमिति । अत्र तस्य चेत्यविना विष्णोर्ब्रह्मगवादिमूलकत्वमुक्तं । तदयुक्तं । सर्वकारणकारण इत्यनेन विरोधादत उच्यते । इदमसुरोक्तत्वादासुरं मतं । यद्वा । तस्य विष्णोः । ब्रह्मगवादयः । च शब्दसंगृहीतमूलानि । वचनविपरिणामात् । मूल संवरण इति धातोराच्छादका इत्यर्थः ॥ ३९ ॥ इति श्रीभागवते पंचमोऽध्यायः ॥ १०--५ ॥

॥ हरिः ॐ ॥ कालेनेति । अत्र द्रव्याणीत्यनेनैवात्मलाभे पुनः पार्थक्येनात्मग्रहणमयुक्तमित्यत उच्यते । चेतनोऽचेतनश्चेति



भावोऽपि द्विविधो मत इति द्रव्यवैविध्यविवक्षया पृथगात्मग्रहणेऽपि नायुक्तता । तथा च क्षित्यप्तेजोमरुद्व्योमकालादिग्देहिनो मन इति कारिकोक्तनवद्रव्याणामित्थं शुद्धिः । शूद्रान्नं त्रिदिनैः शुध्येदित्यादिना कालेन पार्थिवभागस्य शुध्या । कालेन क्षितिः सतां स्नानेनापो हरंत्यघं तेंऽगसंगात्तेष्वास्ते ह्यघभिद्धरिरिति गंगां प्रति भगीरथोक्तेः । शौचेन तापादिना संपादितशुध्या तेजोंऽश-भूतं सुवर्णादि । तापादिना हेम मलं जहातीत्युक्तेः । संस्कारैः रेचनपूरणकुंभकाद्यैर्मरुत् प्राणरूपो वायुः । प्राणान्संशोध्य यत्नेन पूरककुंभकरेचकैरित्युक्तेः । तपसा । तप आलोचन इति धातोः । ध्यानरूपालोचनेन व्योमः हृदयाकाशः । हृदिस्थेध्यायन निष्ठयेत्युक्तेः । ईज्यया । यजपूजादाविति धातोः । पूजादिनाऽशौचसंपादकोपरागादिकालः । दानैः । दो अवखंडन इति धातोः । सामंतिकाहितखंडनैरित्यर्थः । दिशः प्राच्यादयः । संतुष्ट्या कामादिभिरनाविद्धं प्रशांताखिलवृत्ति यच्चित्तं ब्रह्मसुखस्पृष्टं नैवो-त्तिष्ठेत कर्हिचिदिति वचनेन कामाद्यनुपहतप्रशांताखिलवृत्तित्वेन । ब्रह्मदर्शनसुखेनेत्यर्थः । मनो मानसं । ननु पूर्वमात्मशुद्धिसा-धनमुक्त्वा व्यवहितमनःशुद्धिसाधनमुक्तं । अतो व्यत्ययः कथं । अत्रोच्यते । अचेतनजातिमद्द्रव्याणां मध्ये एकस्यैव चेतनत्वेन द्विजातीयस्यात्मनो ग्रहणेऽस्वारस्यं मत्वा मनोनंतरमेवात्मग्रहणं युक्तमिति प्रदर्शनार्थमादौ मनःशुद्धिसाधनोक्तिरिति ज्ञेयं । अध्यात्म-विद्यानामिति विभूतिकथनेन सर्वोत्तमात्मज्ञानार्थकात्मविद्याया आत्मा जीव एतानि द्रव्याण्येते शुध्यंतीत्यन्वयः । एतैः कैरित्या-शंकायां कालेनेत्यादि विविच्य दर्शितं ॥ ४ ॥ ता इति । अत्र चिरं पाहीत्यसंगतं । कं प्रति को वक्तेत्यस्याज्ञानात् । किं च गोप्यः किमज्ञा वा सुज्ञाः । नाद्यः । भगवद्दर्शनप्रसंगात् । द्वितीये भगवद्रक्षणविषयेऽन्यप्रार्थनायोगात् । अतोऽपि विरोधः । अत उच्यते । हे बालके इति जीवंतिकाख्यप्रसूतिदेवतां प्रति गोप्युक्तिः । बालाः शिशवः काः ब्रह्माणः यस्यास्तादृशभगवन्नामिके देवतेत्यर्थः । अत एव जीवंतिकेत्याख्या जीवंति सप्राणा भवंति काः ब्रह्माणो ययेति विग्रहेण समानार्थकत्वात् । यद्वा । व शब्दस्य सुखार्थकत्वात् । वाः सुखरूपाः अलकाः केशा यस्या इति हृषीकेशाख्यत्वात् वस्य सुखात्मकमूलरूपस्य केशरूपे कृष्णे इति सप्तमी वा । तथा च त्वं । इममिति शेषः । चिरं पाहीति बहुकालं रक्षेति आशिषः प्रयुंजानाः सत्य इत्यन्वयः । अथवा । हे बालकाख्यभगवद्देवते । न इति शेषः । चिरं पातुः चिरंजीवनान्यथाऽनुपपत्त्या सिध्यास्ताश्चिरंजीवनात्मका आशिषः प्रयुंजानाः ।

अपि वा । ता गोप्यः । बालके कृष्णे । चिरं पाहि चिरंजीवेति । आशिषः प्रयुंजानाः । अनेकार्था हि धातव इति भागुर्युक्तेः ॥११॥ ॥ वसुदेव इति । अत्र नंदवसुदेवयोः वैश्यक्षत्रियत्वेन भ्रातृत्वमयुक्तमित्यत उच्यते । तस्मै वरः समया संन्निसृष्टः स चास नंदाख्य उतास्य भार्या । नाम्ना यशोदा स च शूरजातः सुतश्च वैश्याप्रभवोऽथ गोप इति तात्पर्यनिर्णयोक्तेर्भ्रातृत्वं युक्तमेवातो न विरोधः ॥ १९ ॥ इति श्रीभागवते षष्ठोऽध्यायः ॥ १०—६ ॥ ॥

॥ हरिः ॐ ॥ अत्रोपगमप्रवेशार्थकयोर्ल्यबंतक्रिययोर्गोकुलैककर्मत्वांगीकारे उपगमं विना प्रवेशानुपपत्त्याऽर्थतस्तत्सिद्धौ पुनस्तद्ग्रहणस्य व्यर्थत्वमतोऽर्थांतरमुच्यते । कंसेन प्रहिता घोरा पूतनेत्यादिना पूतनायाः प्रकृतत्वेन ग्राह्यत्वेऽपि परोक्षतया तच्छब्देन वचनात् । या पूर्वं तुंबुरोः संगता कुबेराच्छापं प्राप्ता सोर्वशीत्यर्थः । खेचरी स्वर्वेश्या उर्वशीमुखा इत्युक्तांतरिक्षचारिणी । यद्वा । आत्मन आकाशः संभूत इति श्रुत्या आत्माख्य नरजातत्वान्नारशब्दः खवाची स आकाशोऽयनं मार्गो यस्य स नारायणः खेचरशब्दवाच्यः । तत्संबंधित्वात्खेचरी उर्वशी तत्पुत्रीत्वेन प्रसिद्धेः । एकदा कुबेरशापावाप्त्यनंतरकाले । पूतनानंदगोकुलमित्येकं पदं । पूतनायाः पूर्वताटकायाः । आनंदाः । आनंदनाम ते लोका इति श्रुतेः । दुःखकारकाः । या । गावः इंद्रियाणि । तासां । कुं आश्रयं । लाति स्वीकरोतीति । तं पूतनादेहं । गौः स्वर्गे इत्यारभ्य भूगवादिषु योषितीति विश्वः । गोत्रा कुः पृथिवीत्यमरः । ला आदाने इति धातुश्च ॥ उपेत्य । आविश्य ॥ आत्मानं । आदत्तं पूतनादेहं ॥ मायया । मोहकशक्त्या ॥ गोपित्वा । आच्छाद्य ॥ कामचारिणी । कामं गोपानां मन्मथं चारयति प्रवर्तयत्यात्मनीति तथा भूता सती प्राविशत् । प्रायेण यमुनातटे वस्त्रनिर्मितं गृहमिति शेषः । तदुक्तं । सा ताटकाचोर्वशीं संप्रविष्टा कृष्णावज्ञानान्निरयं संजगाम । सा तूर्वशी कृष्णभुक्तस्तेन पूता स्वर्गं प्रययौ तत्क्षणेन । सा तुंबुरोः संगत आविवेश रक्षस्तनुं शापतो वित्तपस्य । कृष्णस्पर्शाच्छुद्धरूपा पुनर्दिवं ययौ । तुष्टे किमलभ्यं रमेशे । इति तात्पर्यनिर्णये । विवेश नंदस्य गृहं बृहद्वनं प्रांते हि मार्गे रचितं प्रयाणे । तीरे भगिन्यास्तु यमस्य वस्त्रगृहे शयानं पुरुषोत्तमं तमिति च ॥ ४ ॥ पतमान इति । अत्र षट्क्रोशपर्यंतं द्रुमादिचूर्णीभाव उक्तः । तदा व्रजस्य कथं सत्त्वेन स्थिति-रित्यतोविरोधोऽत उच्यते । दुर्गाजन्मनः प्राक् कंसाय करं दातुं व्रजान्निर्गतस्य नंदस्यानुवृत्त्या गतया यशोदाया मार्गमध्ये यमुनातीरे

पटवेश्मनि प्रसवे जाते तत्र चतुर्मासं वसतौ कृतायां पूतनावधस्य तत्रैव संभवाद्बृहद्वनास्थितव्रजस्य न चूर्णीभावः । तदुक्तं । पूर्वं हि नंदः स करं हि दातुमित्यारभ्य पपात सा व्याप्यवनं समस्तमित्यंतं तात्पर्यनिर्णये । अत एवाद्भुतामिवेत्युक्तं । अस्याल्पद्रष्टृणा-मद्भुततत्वेऽपि बहुद्रष्टृणामद्भुतमिवाभवत् । न त्वद्भुतमिति भावः । नन्वेवं चेत्प्रजाः संमृष्टमसंसिक्तेत्यादिना गोपीमोदवर्णनेन च विरोध इति चेन्न । गोपाः समाययू राजन्निति बलिभिस्त्वरितं जग्मुः । पृथुश्रोण्य इति च कथनेन बृहद्वनस्थव्रजमलंकृत्य जन्मो-त्सवदर्शनार्थं गमनलाभात् । रोहिण्या अपि तथैवागमनांगीकारात् । कासांचिद्गोपीनां व्रजं त्यक्त्वा सूतिकासंनिधौ स्थित्यभ्युप-गमेन च न कश्चिद्विरोधः ॥ १५ ॥ गोप्य इति । अत्र बीजन्यासमित्यत्र व्याख्यातृभिरष्टाक्षरन्यासमिति व्याख्यातं । अष्टाक्षरस्य वैदिकत्वेन स्त्र्यनधिकारिकत्वाद्गोपीनां च कर्तृत्वाद्विरोधोऽत उच्यते । प्राहुरप्युत्तमस्त्रीणामधिकारं तु वैदिके इत्युक्तेः । देवस्त्रीणां गोपीरूपत्वेनावतीर्णत्वादुत्तमत्वेनाधिकारसद्भावात् । वस्तुतस्तु गोप्यः ॥ संस्पृष्टसलिला । उपस्पृष्टोदकाः । सत्यः ॥ करयोः । करांगुलीष्वित्यर्थः ॥ अंगेषु । हृच्छिरः शिखादिपंचांगेषु ॥ पृथक् । कर्णबीजपार्थक्येन । ॥ न्यस्य । भूरग्नयात्मनेऽनिरुद्धायेत्यादि सत्यं सत्यात्मने नारायणायेत्यंतानां न्यासं । कृत्वा ॥ अथ । उभयन्यासानंतरं । बालस्य ॥ आत्मनि । शिर आदिजीवबिंब-रूपांतस्थानेष्वित्यर्थः ॥ । बीजन्यासं । अं अजायनम इत्यादि क्षं नृसिंहाय नम इत्यंतं मातृकान्यासं ॥ अकुर्वत । चक्रुः । यद्वा । आत्मनि शिरोहृत्पादरूपांगेष्वित्यर्थः । बालस्य बालकृष्णस्य । बीजन्यासं क्लीमिति बीजन्यासं । अकुर्वत । केचिदाबालयोरुभयो-र्न्यासकरणं व्याचक्षते । तच्चिंत्यं । तथात्वे न्यस्यात्मनोऽथ बालस्येति न्यस्यात्मन्यथ वा बालस्यैति पाठः स्यात् । षष्ठीसप्तम्योस्तु पृथग्विभक्तिप्रदर्शने कारणाभावात् । अयमप्यर्थो व्याख्यातृहृदं वरवर्ती । अविरुद्धत्वात्प्रादर्शयिष्यमाणत्वाच्च ॥ २२ ॥ अव्यादिति । अत्र पादादिशिरोंऽतन्यासोक्त्या लयन्याससिद्धेः । तन्न्यासस्य च यत्याधिकारिकत्वात्कृष्णे च तदाश्रयाभावात्कथमयं न्यासो युज्यतेऽत उच्यते । नायं न्यासः किंतु इयमंगरक्षाऽतो न विरोधः । तथांऽगीकारपक्षे व्याख्यातृभिः पूर्वं द्वादशांगेषु नामभिरि-त्यत्र द्वादशांगेषु ललाटादिद्वादशावयवेष्विति व्याख्यानात् । आत्मानं भगवान्पर इत्यत्रात्मानं मध्यमिति व्याख्यास्यमानत्वात् । पूर्वश्लोके न्यस्यात्मन्यथेत्यत्रात्मशब्दस्य मध्यार्थकत्वात् । तेन च सृष्टिलययोर्मध्यस्थत्वेन स्थितिन्यासासिद्धेश्च । अत्र च लयन्या-

सोक्त्या त्रयाणामप्याश्रमाणां स्वावयवेभ्यो जनकस्य कृष्णस्योपनयनाभावेन पृथगेकैककरणायोगात् त्रयाणामपि न्यासानां युक्तत्वं बोद्धव्यं ॥ २३ ॥ पूतनेति । अत्र पूतनाया जिघांसया स्तनदानेन सद्गतिरुक्ता । तदयुक्तं । तं यथा यथोपासते तदेव भवति । ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहमिति श्रुतिविरोधापातात् । अत उच्यते । राक्षसी ॥ पूतना । पूतिं दुर्गंधं नयति प्रवर्तयतीति सा तथा ॥ जिघांसया । वधेच्छया । निमित्तेन ॥ रुधिराशना । रुध्या निरोधे नरः अग्निबीजतया दाहो यस्मिंस्तत्तमः अश्नाति प्राप्नोतीति सा तथा । अभूदिति शेषः । अशु प्राप्ताविति धातोः । या ॥ आलोकबालघ्नी । आलोकेन अवलोकनेन बालान् विषयाभिमुखत्वेन बालिशान् हंति अनर्थं प्रापयती सा तथा ॥ पूतना । पूतः तपसा पवित्रः विश्वामित्रादिः ना पुरुषो यस्याः सा । पूतान्नयति स्ववशमिति वा । नृ शब्दात् स्त्रीयां ङीषोऽपेक्षितत्वेऽपि टाप्समानेति सूत्रोक्तदिशा ध्येयः । तादृगुर्वश्यपीत्यर्थः । हरये स्तनं दत्वा ॥ सद्गतिं । अप्सरस्स्वरूपां गतिं । आपेति न कोऽपि विरोधः ॥ ३६ ॥ किं पुनरिति । पूर्वश्लोके उर्वश्याः स्तनदानेन सद्गतिप्राप्त्युक्तौ किं पुनः शब्दासंगतिः । जिघांसयाऽपि स्तनदानेन सद्गतिप्राप्तौ श्रद्धया दातुरेव कैमुत्यकथनस्यौचित्यात् । अत उच्यते । जिघांसया युक्ता पूतना देहस्थितायास्तद्द्वारा स्तनदानेन सद्गतिप्राप्तौ तत्संघविहीनाः पृश्नयदितिदेवकीयशोदाख्या रक्ता भक्ता मातरो यथा सद्गतिमाप्नुयुस्तथा ॥ श्रद्धया । विश्वासयुक्तया ॥ भक्त्या । माहात्म्यज्ञानपूर्वकातिस्नेहेन । कृष्णाय ॥ किंचित् । किमपि । प्रियतमं ॥ यच्छन् । ददन् । सद्गतिं प्राप्नुयादिति किं पुनर्वक्तव्यमित्यंगीकारे नासंगतिदोषः । अयमर्थोऽग्रिमश्लोके व्यक्तो भविष्यतीति । ॥ ३७ ॥ पद्भ्यामिति । उर्वश्याः पूतनासंसृष्टत्वं कैमुत्यसिध्यर्थमुक्तं स्पष्टयति ॥ पद्भ्यामिति द्वाभ्यां ॥ अंग पूतनाशरीरं समाक्रम्य । स्थिताया इति शेषः ॥ यस्याः । उर्वश्याः । स्तनं भगवानपिबत् ॥ ३८ ॥ यातुधान्यपीति । सा ॥ यातुधानी । यातु पूतनाख्यं रक्षः तस्मिन्धीयत इति यातुधानी पूतनाविष्टाऽप्यूर्वशीत्यर्थः । जनन्यायाः यशोदायाः गतिर्यत्र तं स्वर्गमवाप । कृष्णभुक्तस्तनक्षीरा अत एव । अनुमातरो हितापेक्षया मातृसमाना गावो जननीगतिमवापुरिति किमुवक्तव्यमित्यर्थः ॥ ३९ ॥ इति श्रीभागवते सप्तमोऽध्यायः ॥ १०–७ ॥

॥ हरिः ॐ ॥ तद्दामेति । अत्र द्व्यंगुलस्यैवोनत्वे किं निमित्तमित्यस्यापरिहारदर्शनाट्ठकुराभिप्रायो व्यक्तीक्रियते । भगवद्बंधनांगीकारविषयकृपोत्पादने साधनत्रयमपेक्षितं । भक्तिर्ज्ञानं वैराग्यं चेति । तत्र यशोदाया यदि ज्ञानं स्यात्तर्हि न चांतर्न बहिर्यस्येत्यादिनोक्तस्य बंधने कथं प्रवृत्तिः स्यात् । तथा वैराग्यं यदि स्यात्तर्हि दधिभांडविध्वंसेन तद्बंधने कथं प्रवृत्तिरत उभयाभावः । भक्तिस्तु । जातयोर्नौ महादेवे भुवि विश्वेश्वरे हरौ । भक्तिः स्यात्परमा लोके ययाऽजो दुस्तरं त्यजेत् । अस्त्वित्युक्त इत्यारभ्य ततो भक्तिर्भगवति पुत्रीभूते जनार्दने दंपत्योर्नितरामासीदित्युक्तेः । सिद्धा । अत्र द्व्यंगुलिशब्दो न केवलोन्मानार्थकः किंतु वस्तुद्वयशंसने द्व्यंगुलप्रसारणवत्संकेतेन संख्यार्थकश्च । अत एकभक्तिसद्भावेऽपि उभयोर्ज्ञानवैराग्ययोर्न्यूनतां द्योतयितुं द्व्यंगुलोनताया एव प्रदर्शनं । अत एव चतुरध्याय्यां साधनाध्याये चतुष्पादानां पृथक् पृथक् प्रमेयत्वेऽपि सद्विर्वैराग्यभक्तिश्च श्रुतिमतिनियतध्यानजज्ञानयोगाद्गम्यमित्युक्त्वा तृतीयपादोक्तोपासनाया ज्ञानकारणत्वं प्रदर्श्य वैराग्यभक्तिज्ञानानामेव त्रयाणां भगवद्प्राप्तिसाधनत्वं टीकाचार्यैः प्रतिपादितं । यद्यप्यत्र कृपाऽपरपर्यायप्रसादोत्पादकज्ञानस्य वैराग्यभक्त्युपासनहेतुकत्वमुक्तं । तथापि कलौ मानुषलोके प्रायः स्त्रीणां वेदार्थश्रवणमननध्यानकर्मण्यधिकाराभावादुपासां विनैवात्र साधनत्रयमंगीकृतमिति बोध्यं ॥ १५ ॥

नेममिति । विरिंचादयस्त्रयो मिलित्वा कर्तृत्वेन योजिताश्चेत्त्रयाणां नकाराणामनन्वयः । तदर्थं पृथक् पृथगन्वये क्रियाबहुवचनायोगः । अतोऽर्थांतरस्य वक्तव्यतायां केचित् लेभिर इत्यस्य लेभिरं स्यादूलूखलमिति कोशबलेनोलूखलार्थकतां कल्पयित्वा लक्षणया बंधनाधिकरणतां वदंति । तन्नित्यं । तत्कोशस्यैवानुपलब्धेः । अत इत्थं योजना । तत्रैवं पदच्छेदः । ना इमं विरिंचः अनभवः नश्रीः अपि अंगसंश्रया प्रसादं लेभिरे गोपी यत् तत् प्राप विमुक्तिदात् इति ॥ गोपी । यशोदा ॥ यत् । यस्मात्कारणात् ॥ इमं । स्वसंबंधानानुकूल्यरूपं ॥ प्रसादं ॥ विमुक्तिदात् । यथायोग्यविशेषसहितमुक्तिदातुर्भगवतः सकाशात् ॥ प्राप ॥ तत् । तस्मात्कारणात् ॥ इमं । उक्तार्थं प्रसादं । हरिप्रीतिसाधनत्वाभावात् ॥ अपि । गर्हितं । अपि गर्हासमुच्चये इत्यभिधानात् ॥ ना । सर्वप्रवर्तको मुख्यप्राणः ॥ विरिंचः । ब्रह्मा ॥ अनभवः । अन चेष्टायामिति धातोः । मारुत्येव यतश्चेष्टेत्युक्तेश्च । अनः प्राणः तत्पुत्रः रुद्रः । आभासकोऽस्य पवनः पवनस्य रुद्र इत्युक्तेः ॥ श्रीः । भारती लक्ष्मीर्वा । अंगसंश्रयेति विशेषणं । लिंगविपरिणामेन सर्वकर्तृषु योज्यं । उद्यद्रविप्रकरसंनिभमच्युतांके स्वासीनमित्यादेः । ध्यायेन्निषण्णमजमच्युतांकेऽभिपद्मे इत्युक्तेः । सर्वात्मनोऽ-

तःकरणगिरित्र इत्युक्तेः । स्वभर्तुरंकस्थितामित्युक्त्या आश्रयते स्वभर्त्रंकमिति व्युत्पत्त्या च परंपरया भगवदाश्रितत्वात्। सरस्वती प्रादुरभूत्किलास्यत इत्युक्ते र्वा । श्रियो निवासो यस्योर इत्युक्तेश्च । एतेन लेभिरे बंधनानुकूलीकरणेच्छाभावात्। न तु यशोदायाः सकाशात् । गुणहीनत्वात् । तेषामादिसृष्टौ प्रथमोत्पन्नत्वात् । यत उक्तं । आदिसृष्टौ पूर्वजाये तेऽधिकाः सर्वदा गुणैः । अनाद्यनंत कालेषु मुक्तावपि यथा क्रमामिति निर्बंधे कृपानिमित्तायाः प्रीतिर्नीचभक्तेषु साधिका । आंतरैव तु या प्रीतिः सा तूच्चेषु यथा क्रमं । यथा कश्चित्स्वात्मानं प्रियापुत्रमथाऽपि वा । अतिहाय कृपायुक्तो भिक्षवेऽन्नं ददात्यऽपि । कदाचिदेव न पुनः स्वात्मादेः सार्वकालिकं योगक्षेमबहुत्वं च नित्यं स्वात्मादिषु स्फुटं । एवमेव परेशस्य भक्तेषु श्रीयजादिषु । इति प्रियविवेके च । अत एव भक्त्या भगवता स्वबंधनाय कृतमप्यानुकूल्यं प्रियकारित्वाभावात्कृष्णावियोगजन्यदुःखकारणं जातमिति भावः ॥ २० ॥ इति श्रीभागवते दशमोऽध्यायः ॥ १०—१० ॥ ॥

॥ हरिः ॐ ॥ उवाहेति । अस्य यथा श्रुतार्थांगीकारे हरिवंशे श्रीदामा कृष्णमुवाहेत्युक्तेर्विरोधः । अतोऽत्रत्यकृष्णश्रीदामशब्दयोर्विभक्ती विपरिणम्य कर्मकर्तारौ कल्पनीयौ । विपरीतं किं न स्यादिति चेन्न । बहुमानाविरोधेतु व्यत्यासः शब्दतोऽर्थतः कार्यो निरुक्तं देवानां गुणसिध्यै न चान्यथा । विष्णुर्ब्रह्मा तथा वायुरनिरुक्ताः प्रकीर्तिताः । तत्पत्न्यश्चेतरा गुणा व्यत्यासस्तेष्वसंशय इति ब्रह्मतर्कोक्तिसंवादात् । किंच तत्र चक्रुः परिवृढौ गोपा रामजनार्दनावित्युक्त्या कृष्णस्य परिवृढत्वेन वाहकत्वायोगात् । न हि लोके परिवृढौ वाह्यवाहकौ भवत इति प्रत्यक्षविसंवादाच्च । ननु रामसंघाट्टिनौ ये तु श्रीदामवृषभादय इत्युक्त्या जयवद्रामपक्षस्थः श्रीदामा पराजितं कृष्णं कथं वहेदिति चेन्न। कृष्णस्य पराजितत्वाभावात् । यतो धर्मस्ततो कृष्णो यतः कृष्णस्ततो जयः । यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवानीतिर्मतिर्ममेत्याद्युक्तेः । तर्हूहुः कृष्णादयो नृपेति वाक्यस्य का गतिरिति चेत् । कृष्णोदय इत्यत्रातद्गुणसंविज्ञानबहुव्रीहेरंगीकारात्सुगमैव गतिः । जय्यपि श्रीदामा स्वस्य वाह्यत्वेऽपि कृष्णसखत्वात्स्वयमेव तमुवाह । श्रीदामा नाम गोपालो रामकेशवयोः सखेत्युक्तेः । ननु च भगवतः पराजितत्वासंभवे कथं पराजय इति न शंक्यं । तं भूतिरिति देवा उपासां चक्रिरे । ते बभूवुस्तस्माद्धाप्ये तर्हि सुप्तो भूर्भुरित्येव

प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुरित्यादि श्रुतेः । प्रलंबासुरस्य नैसर्गिकपराजयत्वेन कृष्णपक्षे तत्स्थित्या पराजयप्राप्तेः । तदर्थमपि स्वपक्षपराजयं कथमुररीचकारेति चेत् । दुष्टानां मोहनार्थाय सतामपि च कुत्रचित् । यथा योग्य फलप्राप्त्यै लीलैषा परमात्मन इत्युक्तेर्न कश्चिद्दोषः । उवाह कृष्णो भगवान् श्रीदामानं पराजित इत्यत्रापि पराजित शब्दस्य परैरजित इति विग्रहांगीकाराच्चेत्यलं विस्तरेण ॥ २२ ॥ २३ ॥ इति श्रीभागवते षोडशोऽध्यायः ॥ १०—१६ ॥ ॥

॥ हरिः ॐ ॥ भद्रकालीमिति । अत्र भूयात् भूयां वेत्येकवचनेन नंदस्नुषा इति बहुवचनस्य विरोधः । अतोऽर्थांतरमुच्यते । पूर्वोक्तनंदगोपसुतं देवपतिं मे कुरुते नम इतिवदत्राप्यहं नंदस्नुषा भूयामिति प्रातिस्विकाभिप्रायेण गोप्यो भद्रकालीं समानर्च्युरित्यन्वयः । न चात्र स्नुषा इति संध्यभावो दोषाय । अर्थांतरसापेक्षत्वात् । व्यत्ययोऽतिशयकुत्सनाभेदेष्विति हि सूत्रं । सर्वातिशयितेत्यर्थः । यद्वा । कात्यायनादिशब्दैस्त्वं हि जगदंबेति प्रसिद्धासीति हेतोर्वयं ते स्नुषा इति । तुभ्यामिति शेषः ॥ नंदः । आनंदः ॥ भूयात् । भवतु । अन्यथा त्वं जगदंबात्वेनास्मत्कृष्णयोरपि भ्रातृत्वसंबंधसित्थ्येष्टानाप्तिः स्यादित्याशयेन भद्रकालीं समानर्चुः । अथवा । उक्तरीत्या त्वत्सर्वे स्नुषाः प्रति स कृष्णः । नंदः आनंदकरः । मा भूयात्किन्तु मामेवानंदकरो भूयादिति भावेन भद्रकालीमानर्चुः । किंवा । सर्वजगतस्तेऽपत्यत्वेऽपि स कृष्णोऽपत्यं मा भूयाद्वयं च स्नुषा मा स्याम । अस्माकं त्वदपत्यत्वेऽपि कृष्णस्य तदभावादस्मत् संबंधो युक्तः स्यादित्याशयेन । भद्रकालीं सर्वासां भद्रवंचकां देवीं । कलवंचन इति धातोः । आनर्चुः अपूजयन् । अतो न विरोधः ॥ ७ ॥ इति श्रीभागवते विंशोऽध्यायः ॥ १०—२० ॥ ॥

॥ हरिः ॐ ॥ ते त्विति ॥ ते । गोपाः ॥ तु । भेदेन । तुर्विशेषे तथा भेदे स्वसिद्धांतेऽवधारणे इत्यभिधानात् ॥ ब्रह्मन्हृदं । विरजास्थानीयं ब्रह्मप्रतिपादकं न्हृदं । गंभीरोदकमिव वेदांन्तशास्त्रं ॥ नीताः । प्रापिताः ॥ मग्नाः । तत्र निष्णाता इत्यर्थः । कृष्णं ॥ अचक्षत । ज्ञातवंतः ॥ ब्रह्मणो । गुणपूर्णस्य हरेः ॥ लोकं । स्थानं ॥ ददृशुः । साक्षादपश्यन् ॥ यत्र । लोके ॥ पुरा । पुरातनः । पूर्वकल्पीय इति यावत् ॥ अक्रूरः । श्वाफल्किः ॥ अध्यगात् । प्राप । तं लोकमित्यन्वयः । यद्वा । यत्र न्हदे पुरा गोपेभ्यो वैकुंठप्रदर्शनात्पूर्वं । अक्रूरः श्वाफल्किः । स्नातः सन् । अध्यगात् भगवत्साक्षात्कारमाप । तं ब्रह्मन्हदं ब्रह्मदर्शन-

साधनत्वाद्ब्रह्मऱ्हदनामकं यमुनाऽगाधजलाशयं नीतास्ते गोपा मग्नास्तत्र स्नाताश्च संतो ब्रह्मणो गुणपूर्णस्य । लोकं स्थानं ददृशुः । तत्र कृष्णं चाचक्षतापश्यन्नित्यर्थः । अथवा । यत्र ब्रह्मलोके । अक्रूरः । शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमान इति श्रुतेः । अनुग्रः । जीवन्मुक्तगण इति यावत् । अध्यगात् अधितस्थे । तं ब्रह्मणश्चतुर्मुखस्य । लोकं सत्यलोकं । तत्र ब्रह्मलोके । ददृशुः । तु तदनंतरं । ब्रह्मऱ्हदं सत्यलोकपरिखाभूतगंगाऽगाधजलाशयं । यद्वा । ब्रह्म गुणपूर्णं । हरिं । ऱ्हदा ते प्रतिपादयाति । तत् । ऱ्हद अव्यक्ते शब्दे पचाद्यच् पृषोदरादित्वाद्ध्रस्वः । ब्रह्मज्ञानामित्यर्थः । पुरा कृष्णदर्शनात्पूर्वं । नीताः प्रापिताः । ततस्तस्मिन्मग्ना निष्णाताः संतो ब्रह्मप्रापकादजलात् ज्ञानाद्वा ब्रह्मणो लोकं स्थानमपरोक्षं वा नीताः प्रापिता ददृशुः कृष्णं चाचक्षतापश्यन् । संपूजितं ब्रह्मलोकं चतुर्थं कंजोद्भवेनाथ परं स्वधामेति महाभारततात्पर्यनिर्णयोक्त्या कृष्णस्य पूर्वापररूपाणामैक्येन तत्र सद्भावात्परममुक्तस्थानप्रदर्शने गोपानां लिंगावृत्तत्वेनानर्हत्वात् । सत्यलोकस्थं स्वकं जीवन्मुक्तस्थानं प्रदर्शितवानिति भावः । अन्यथाऽक्रूरस्यैष्यत्प्राप्त्याऽध्यगात्पुरेत्यस्य विरोधः ॥ १५ ॥ इति श्रीभागवते षड्विंशोऽध्यायः ॥ १०—२६ ॥ ॥

॥ हरिः ॐ ॥ गत्वेति । चंदयति आल्हादयति गोकुलमिति चंद्रः कृष्णः । गोकुलचंद्रेति श्रीमदाचार्यैः कृष्णस्य स्तुतत्वात् । तस्य । जोत्स्नां । ज्योतिः प्रकाशः भगवद्रूपस्फुरणमस्त्यस्यामिति ज्योत्स्ना । ज्योत्स्ना तमिस्रेति । निपात्यते भगवान्प्रत्यक्षो भवेदिति मनीषेत्यर्थः । यावत् । विभाव्यतेऽभ्युपगम्यते । तावत् । वनात् वृक्षखंडात् । वन संभक्ताविति धातोः । केवलनिःसीमभक्तेर्वा । वनांतरं अन्यदारण्यं । अन्यां कामयुक्तां भक्तिं वा गोप्यः कामादित्युक्तेः । गत्वा प्राप्य । तमः । तमु ग्लानाविति धातोः । अंतर्णीत ण्यर्थात् । ग्लपनमित्यर्थः । प्रविष्टं प्रे विष्णौ विष्टं आविष्टं अकयप्रविसंभूमसखहा विष्णुवाचका इत्यभिधानात् । अलक्ष्य लक्षणया । आरोप्यातिकरुणत्वात्तस्य । ततो मोहरूपादौरात्म्यात् । तकारः । कीर्तितश्चोरे मोहे युद्धे च कीर्तित इत्येकाक्षरात् । निववृतुः परावृत्ता आसन् । इत्यर्थमनंगीकृत्य यथा श्रुतार्थांगीकारे । तदोडुराजः ककुभः करैर्मुखं प्राच्या विलिंपन्नरुणेन शंतमैः । स चर्षणीनामुदगाच्छुचो मृजन्निति वाक्येन दिवा चंद्रोदये प्राचीरागासंभवेन च रात्र्युदयसिध्या रात्रावस्थानानुपपत्तेर्विरोधापत्तिः । राकेशकररंजितमित्यस्यापि विरोधः । ननु पर्वमैथुनस्य निषिद्धत्वात्कथमिदामिति



चेन्न । राक शब्दस्य न पौर्णिमापरत्वं । किंतु राति सुखमिति राकारादाने कृदा वारेति कः इति विग्रहेण रात्रिवाचकत्वं । स्वापं प्रापयति श्रमापहृतये इत्युक्तेः । अतो । राकेशः चंद्रः । रात्रिनाथत्वात् । औषधीशो निशापतिरित्युक्तेश्च । तस्मान्न निषिद्धाचारित्वं कृष्णस्येति भावः । परस्त्रीसेवनादिकं स्वयं शुकेनैव परिहृतं । आत्मारामत्वादितीति ॥ ३३ ॥ ३४ ॥ इति श्रीभागवतटिप्पण्यामष्टाविंशोऽध्यायः ॥ १०—२८ ॥ ॥

॥ हरिः ॐ ॥ जयतीति । हे ॥ दयित । प्रिय । त्वा दिदृक्षतां नस्त्वया दृश्यतां दृग्विषयीभवितव्यं । इति यथा श्रुतयोजनायां । अत्र न इति अस्मच्छब्दादेशेन गोपीनामेव विवक्षितत्वात् दिदृक्षतामिति पुंल्लिंगं बाधितं स्त्रियां तु दिदृक्षतीनामिति भवेत् । तथा च त्वयि धृतासव इत्यत्रापि वयमिति विशेष्यं न युज्यते । विचिन्वत इत्यस्य उत्तमपुरुषत्वाभावात् । तस्मादियं सामान्योक्तिः । ये ये त्वयि धृतासवः संतस्त्वां विचिन्वते तेषां । त्वा दिदृक्षतां त्वां प्रति द्रष्टुकामानां । त्वया । दृश्यतां दृग्गोचरणं भवितव्यमिति न विशेषतो गोपीनां ग्रहणं । न च तत्कृतस्तोत्रप्रयासो वृथा स्यादिति शंक्यं । सामान्यवाक्येन गोपीनामपि द्रष्टुकामत्वस्य सद्भावेन निवेशयोग्यत्वात् । यद्वा । ते तव । जन्म । अधिकं सर्वाधिकं कं सुखरूपं । अतः । जयति सर्वोत्कर्षेण वर्तते । अधिकृतं अधिकारानुसारि कं सुखं यस्य तादृशरमायुक्तामुक्तब्रह्मादिचेतनगणं जयति । जित्वा तिष्ठति । तत्र हेतुमाहुः । हि यस्मात् । यत्तदोर्नित्यसंबंधेन तत्रेति बलाद्यत्रेति लभ्यते । यत्र पद्मालयादिषु । ते इंदिरा आस्ते तत्र त्वं । न अव्रजः न गतवानसि । व्रज गताविति हि धातुः । इदं साधुयुक्तं । रमाया अन्वेषणकर्तृत्वाभावात् । इति भावः । तथाऽपि त्वयि धृतासवस्त्वत्सान्निध्येनैव प्राणधारकाः संतः । त्वां । विचिन्वते अन्विष्यंति । त्वा त्वां दिदृक्षतां द्रष्टुकामानां । ये ये दर्शनार्थिनस्तेषां त्वं । दृश्यतां दृष्टिविषयत्वं । श्रय अंगीकुरु । अन्वेषके दर्शनदानाभावेऽप्रशस्यतापातेन जन्मोत्कर्षवर्णनस्य वैयर्थ्यादिति भावः ॥ १ ॥ प्रणतकामदमिति । अत्र प्रासभंगो न शंक्यः । प्रायः सर्वत्र चतुश्चरणानां द्वितीयाक्षरस्यैकत्वेऽपि ग्रंथकर्त्रे श्रीवेदव्यासायात्र तृतीयाक्षरैक्येन प्रासानां विवक्षितत्वात् । न चाद्यपादे तदभावः । प्र शब्दे वर्णद्वयांगीकारेण णस्य तृतीयत्वसिद्धेः । नाप्याद्यचरणे वर्णाधिक्यप्रसंगः । छंदोविषये प्रस्यैकवर्णत्वेनांगीकारात् । अत्र परस्परं विशेषणासंगतिस्तु गोप्य

उचुरित्यनेन गोपीनां बाहुल्यात्कयाचित्प्रणतकामदमित्युक्तं । अन्यया पद्मजार्चितमिति । अपरया धरणिमंडनमिति । इतरया ध्येयमापदीति पृथक् पृथगुक्तत्वात् । उत्तरार्धस्य न इत्यनेन सर्वाभिर्मिलित्वाऽभिहितत्वान्न दोषावहा । यद्वा । त्वया त्रेधा निहितमपि पदं लोकानां ध्यानास्पदं जातं । परंत्वाधुनिकसुखास्पदं नास्तीति भावेनाहुः ॥ प्रणतकामदमिति । ते तव । चरणपंकजं । धरणीमंडनं गयां स्थितत्वेन भूमिशोभाकरमेकं । द्वितीयं । प्रणतकामदं । प्राय विष्णवे नताः प्रह्वा इंद्रादयः । अकयप्रविसंभूमसखाहा विष्णुवाचका इत्यभिधानं । नस्य णत्वं तु छांदसं । प्रणतानां इंद्रादीनां । कामः स्वर्गराज्यभोगरूपः तं ददातीति तत् । अनेनांतरिक्षगमनमिति सूचितं । सत्यलोके ब्रह्मणा प्रक्षालनादिना पूजितं । अनेन दिविष्ठं । एतत्त्रिविधमपि पदं आपदि ध्येयं । न तु सुखकारकं । दूरस्थत्वेन परोक्षत्वात् । अतः स्वपदस्य सुखकारकत्वापेक्षा तवास्ति चेत् । चरणपंकजं नः स्तनेष्वर्पय । तदा । शंतमं अतिसुखकारकं । भवेत् । यद्वा । आपदि आ निकटे पदानि सप्तदशपदानि संत्यस्योति आपदि । इति गयास्थविष्णुपदविशेषणं । प्रत्युत ध्येयत्वमप्यशक्यं । दृष्टस्यैव ध्यानगोचरत्वेनास्य दूरस्थत्वेनादृष्टतया मानसाविषयत्वात् । तस्मादश्रुपातयोग्यत्वेन न स्तनयोर्नेत्र संनिहितत्वाद्दर्शनयोग्यत्वेन ध्यानस्यापि सुशकत्वमिति भावः । यद्वा । स्तनमर्दने करस्यापेक्षितत्वेऽपि चरणप्रार्थने केचिदाख्यायिकाकथनपूर्वकमर्थमाहुः । स इत्थं । स्वभर्तरि हरदग्धे सति रतिस्तस्य सुगत्यर्थं गोपीमाविश्य स्तनरूपौ पिंडौ भगवत्पादेऽर्पयितुमियं प्रार्थना । न चात्र पिंडत्रयस्य विहितत्वेऽपि पिंडद्वयदानं कथमिति शंक्यं मदनस्य विष्णुपुत्रत्वेन विष्णोश्च पितृभावात्तृतीयपिंडस्यापि निरधिकारित्वात्तदसमंजसं । स्त्रीयोन्युब्जत्वं विना स्तनपादसंबंधानुपपत्तेः । न्युब्जत्वस्य चरितकाले स्त्रीणां निषिद्धत्वात्स्तनानामधिकरणत्वस्य चरणांबुजस्याधेयत्वेन कथनाच्च । अत इत्थं योजना । स्वशरीरे हरेण दग्धे कामो नीचाश्रयो न कर्तव्यः कर्तव्यो महदाश्रय इति न्यायं स्मृत्वाऽनुतप्तो योनिरूपं स्वस्य नीचं स्थानं विसृज्य गोपीनां स्तनमंडरूपमुन्नतस्थानं दृष्ट्वा तत्रस्थो भूत्वा गोपीरपीडयत् । तदा गोप्यस्तत्पीडिताः सत्यस्तदुच्चाटनोपायं विमृशंत्यो भगवच्चरणस्पर्शेन शकटात् शकटासुरस्य ह्रदात्कालीयस्योच्चाटनं वीक्ष्य तच्चरणस्पर्शेन कामापगमे वयं निष्कामत्वेन सुखं प्राप्स्याम इत्याशयेन स्वस्तनेषु तच्चरणस्पर्शं प्रार्थयते । यद्वा । सुरतासनेषु स्त्रिया पुंकटौ स्वपादाभ्यां बद्धायां पुंसा स्त्र्यूरुबहिष्ठात्कृतपादयोरुरसिस्थानरूपं

पाशासनमाकांक्षमाणा आहुः । चरणपंकजस्यैकवचनत्वात्तस्मिन्नेवासने एकं पादं निधाय । शंतमं अतिसुखकारकं । करं च प्रार्थयंत इति वा । किंवा । शंतमंचेति कृष्णसंबोधनं । शं सुखं तनोति विस्तारयतीति शंतः तादृशो मंचः पर्यंको यस्य स तथेत्यर्थः । अथवा । हे आधिहन् कामजन्यमनोव्यथानिवारक । भवच्चरणे सर्वैः पुष्पसमर्पणं कार्यं । त्वया तु देवाय पुष्पसमर्पणं न क्रियते । अतस्तव पुष्पलाभः कथं स्यात् । अतः शंभोर्लिंगाकारेष्वस्मत्स्तनेषु स्वचरणलक्षणकमलपुष्पार्पणं कुरु । चकारात्पुष्पजन्मसुखालिंगार्पणं च कुर्वीति प्रार्थना । तेन तव शुक्रपुष्पलाभः स्यादिति भावः ॥ १२ ॥ इति श्रीभागवतटिप्पण्यामेकोनत्रिंशोऽध्यायः ॥ १०—२९ ॥ ॥

॥ हरिः ॐ ॥ बदरेति । अस्य श्लोकस्य विजयध्वजतीर्थकृतावतारिकेयं । जनसमये क्षीराब्धितीरवालुकासु नववीथिषु विक्रमं कुर्वंतमुच्चैःश्रवसं प्रशस्य बलभद्रप्रशंसयोपसंहरतीति । अस्यासंगतत्वं कैश्चिदुच्यते । अतोऽर्थ उच्यते । अत्रोच्चैःश्रवशब्देन कृष्णाश्वौ गृह्येते । उभयत्र प्रातिस्विकत्वेनोपमेयत्वोपमानत्वेऽपि । उपमानचंद्रपक्षे जनसमये जन्यतेऽमृतादिसारमनेनेति जननं मथनं तत्काल इत्यर्थः । नवा अभिनवा वीथयो जलोभयपार्श्वस्थानानि यासां तासु । क्षीराब्धितीरवालुकासु विक्रमं उत्पन्नरूपं पादविक्षेपं कुर्वंतं उच्चैःश्रवसं उर्ध्वकर्णं सुराश्वमिवेति । उपमेय कृष्णपक्षे जननसमयेऽवतारकाले । प्रादुर्भावो हरेर्जनिरित्युक्तेः । क्षीराब्धितीरवत् वालुका यासु तासु नववीथिषु यमुनाजलपार्श्वेषु विक्रमं पादविक्षेपं कुर्वंतं संचरंतमित्यर्थः । उच्चैःश्रवसं महापुण्यश्लोकं श्रीकृष्णं प्रशस्य प्रशंस्य प्रशंसया संवर्ण्य बलभद्रप्रशंसयोपसंहरतीत्यवतारिकार्थः ॥ अथ श्लोकार्थः ॥ बदरवत् चंद्रवत् पांडुगौरं वदनं यस्य सः । मानवो बदरः सिंधुः शशिनस्तु पिनामकमिति वचनात् । मृदुगंडमित्येकवचनं न प्राण्यंगत्वेन विवक्षितं किंतु हलधरस्यैककुंडलकुंडलत्वेनैकगंडस्यैव मंडितत्वादिति ध्येयं । अत एव कनककुंडललक्ष्म्येत्यत्र कनककुंडलस्येति षष्ठीतत्पुरुषः समासः द्वौ रौ रेफौ यन्नाम्नि स द्विरः भ्रमरः तेन दाय्यते शोध्यते स द्विरदः सुगंधः । देप् शोधन इति धातुः । तेन राजंते शोभंते तानि द्विरदराजानि कमलानि तेषां विविधाः विशिष्टा वा हाराः मालाः यस्य स तथा । अत एव दिनांतस्थसूर्यरक्तिमासहितचंद्रदृष्टांतो युज्यते । चंद्रस्वच्छरामस्य रक्तकमलमालाद्युपेतत्वात् ॥ यद्वा ॥ द्विरदवत् कृष्णवर्णेन राजतेऽसौ

द्विरदराजः कृष्णः तेन सह विहारः क्रीडा यस्य स तथा। दिनांते। नामैकदेशग्रहणेन नामग्रहणमिति न्यायात्। दिनस्य दिनकरस्य अंते समीपे स्थितौ यामिनीपतिः चंद्र इव। लुप्तकांतिरिति यावत्। दृश्यत इति शेषः। गजत्विट् कृष्णेन सह विहारात्॥ निष्प्रभ इति भावः। तस्मात् श्लोकावतारिकयोः संगत्यभावो नास्तीति ॥ २४॥ इति श्रीभागवतटिप्पण्यां त्रयस्त्रिंशोऽध्यायः॥ १०—३३॥

॥ हरिः ॐ॥ तास्तथेति। अत्रायास्य इति भगवत्प्रतिज्ञा मोघेव दृश्यते। व्रजं प्रत्यनागमनादिति चेन्न। यतः संप्रेष्यैः सम्यक् प्रेषणार्हैः दौत्यकैः संदेशहरोद्धवहलधरसंबंधिवाक्यैः। तद्रूपेणेति यावत्। न तु स्वस्वरूपेणेति विशिष्या यस्य इत्युक्तं। तस्मान्न प्रतिज्ञा प्रतियात इति भावः। उद्धवे। संदेशहरत्वं दूतत्वं च युज्यते। श्रूयतां प्रियसंदेशो भवतीनां सुखावहः। यमादायागतो भद्रा अहं भर्तुर्हि किंकर इत्युक्तेः। न च स्वरूपतोऽनागमने वाक्यानि प्रेषयिष्यामीति वक्तव्यं। आयास्य इति तु कथं तत्र स्वरूपस्यैव युक्तत्वादिति वाच्यं। भगवतस्तात्त्रियाणां च नेह नानास्ति किंचनेति श्रुतेर्भेदाभावात्। वाक्यानि तु भवतीनां वियोगो मे इत्यादीनि। तत्रास्मच्छब्दसद्भावेन भगवद्वाक्यत्वमवगम्यते। आगमिष्यत्यतिदीर्घेण कालेन व्रजमच्युतः साक्षाद्व्रजमागमिष्यतीत्यस्य दर्शनात्पुनः पूर्वशंकातादवस्थ्यमिति चेन्न। अत्राच्युतशब्देन रामाविष्टशुक्लकेशभगवद्रूपग्रहणस्य विवक्षितत्वात्। हत्वा कंसं रंगमध्ये प्रतीपं सर्वसात्वतां यदाह वः समागम्य कृष्णः सत्यं करोतीति तत्। इति नंदं प्रत्युद्धववाक्ये कृष्णवाक्यसत्यकरणकथनस्य का गतिरिति चेत्। तात्कालिकमिदं वाक्यं। यात यूयं व्रजं यात। वयं। चस्त्वर्थे। सुहृदां वसुदेवादीनां सुखमविधाय स्नेहदुःखितानपि ज्ञातीन् गोपान् द्रष्टुं नो एष्यामः। इत्यर्थकस्ववाक्यस्य कृष्णेन सत्यत्वसंपादनमेव हि कृतं दृश्यते। हंत तर्हि नोऽस्माकामित्यादि विजयध्वजीयव्याख्यानविरोधः स्यादिति चेन्न। एष्याम इत्यस्य कर्मत्वेन विवक्षितं श्यमंतपंचकक्षेत्रमिति शेषांगीकारे विरोधगंधाभावात्। तस्मान्नात्रायुक्तं किंचित्॥ ३२॥ इति श्रीभागवतटिप्पण्यां सप्तत्रिंशोऽध्यायः॥ १०—३७॥ ॥

॥ हरिः ॐ॥ इत्युक्त्वेति। अत्र दिनात्यय पदस्यास्तकालार्थत्वांगीकारे ततोऽपराह्णे भगवान्कृष्णः संकर्षणान्वित इति



वक्ष्यमाणश्लोकेऽपराह्णपदेन विरोधो भवेत्। अतोऽर्थांतरं। उदयात्पर्यावर्तनपर्यंतं दिनवृद्धिः। आवर्तनादस्तपर्यंतं दिनक्षयः। एतद्विवक्षया दिनात्यय इत्युक्तं। मध्याह्नादूर्ध्वमित्यर्थः॥ यद्वा॥ दीयते क्षीणो भवति स दिनः। दीङ् क्षये दिवादिः इण्सिञ् जि दीङिति नक् बाहुलकाद्ध्रस्वः। क्षयोन्मुखः कंस इत्यर्थः। द्यति खंडयति देवकीषडपत्यानीति दिनः कंसः। दोऽवखंडने। द्यतेः किनन्। तस्यात्ययः क्षयः तस्मिन्विषये रामं कृष्णं च मथुरामनयदित्यर्थः॥ ६॥ इति श्रीभागवतटिप्पण्यामूनचत्वारिंशोऽध्यायः॥ १०—३९॥ ॥

॥ हरिः ॐ॥ निर्गत्येति। अत्र चतुर्द्वारस्येत्युक्तं। तदसमंजसं। चतुरिति बहुसंख्याविशेषणेनैकवचनानुपपत्तिरूपविरोधादत उच्यते। चतुर्द्वारस्येतीदं न विशेष्यं किंतु चत्वारि द्वाराणि यस्येति व्युत्पत्त्या मथुरानगरविशेषणत्वेनांगीकार्यमतो विरोधाभावः। समाहारो वांऽगीकार्यः॥ ३२॥ इति श्रीभागवत टिप्पण्यामूनपंचाशत्तमोऽध्यायः॥ १०—४९॥ ॥

॥ हरिः ॐ॥ कार्याणामिति। अत्र भार्गवरामेण कृष्णाय नमनं कृतमिति दृश्यते। तस्यायुक्ततामाशंक्य टीकाकारैः सर्वावतारभिन्नोऽपि। सर्वशक्तिरपि स्वयं पूज्यपूजकनीचोच्चं मोहनाय दुरात्मनां। अखंडैकरसो विष्णुर्दर्शयेच्चत्र तत्र हीति तात्पर्यस्थषाड्गुण्यवचनेन परिहृता यद्यपि। तथाऽपि प्रणाममंत्रे चक्रतुर्वीरावित्यत्र तद्विरोधपरिहारेऽपि नमस्ते पुंडरीकाक्षेति भार्गवोक्तौ नाय परिहारो युज्यते। मोहस्यैव संभवात्। दुरात्मनां हि ह्यवताररूपाणां पृथग्दर्शनेन मोहसंभवेऽपि ब्रह्मक्षत्रियोः पूर्वापरवयसोश्च क्रमान्नम्यनंतृभावस्य स्फुटत्वेनाज्ञानानुपपत्तिः। तस्मात्कृष्णाय भार्गवनमनोक्त्या विरोधः। तदर्थमर्थांतरं। पूर्वमेतदवतारात्प्राक् हे पुंडरीकाक्ष पुंडरीकस्य नाभ्यकमलस्याक्ष आधार। अक्षो रथांग आधारे इति यादवः। चतुर्दशभुवनानां तत्कमलकार्यत्वात्तन्मुख्यकर्तृत्वेनापि संबोधयति। हे विश्वलोकैककारण विश्वे ये सर्वा ये लोकाः सत्यलोकादिपातालपर्यंताश्चतुर्दशास्तेषां सर्वेषां एककारणं मुख्यनिर्मातः। अत्रैकेति पदस्य मुख्यार्थत्वानंगीकारे पद्मकोशं तदाविश्य भगवत्कर्मचोदितः। एकं व्यभांक्षीदुरुधा त्रिधा भाव्यं द्विसप्तधेति वचनेन ब्रह्मण्यतिव्याप्तं लक्षणं स्यादतो मुख्यार्थकमेकं पदं गृहीतं। ब्रह्मणो लोककारणत्वेऽपि भगवत्कृतपद्मकोशस्योपादानीकरणात्। भगवत्कर्मचोदित इत्युक्त्या तत्प्रेरणाच्चामुख्यत्वात्। भगवतस्तु यस्येहावयवैर्लोकान्कल्पयंति मनीषिणः। ऊर्ध्वादिभिरधः सप्त-

सप्तोर्ध्वं जघनादिभिरित्युक्त्याऽन्यकृतस्योपादानकारणाभावादन्यप्रेरणाभावाच्च लोकमुख्यस्रष्टृत्वं ते त्वदीयं नमः नमस्कारः मा मां प्रति मामुद्दिश्येत्येत्यर्थः । उद्देशस्य चतुर्थ्यर्थकत्वेन तंत्रसारादौ गृहीतत्वात् । नमः स्वाहेत्यादिना प्राप्ताया अपि चतुर्थ्याऽभावप्रयुक्तदोषाभावः । अस्त्विति शेषः । नन्वावयोर्भेदाभावान्मदीयनमनं तुभ्यं कथं युज्यत इत्यतो हेतुगर्भरूपविशेषणेन स्वात्मानं विशिनष्टि ॥ आदिपुरुषमिति । आ अतिक्रम्य आदिपुरुषं पूर्वावतारं समं स्थितस्त्वं राघवव्यवधानेन पूर्वावतारमित्यर्थः । अतो नम्यत्वयोग्योऽहमिति भावः ॥ यद्वा ॥ मादिपुरुषं मां रमामादत्ते दारत्वेन स मादी स चासौ पुरुषश्च तं रमाकारणपुरुषं वा । मम योनिरप्स्वंतः समुद्र इति श्रुतेः । मः शिवश्चंद्रमविधा इत्यभिधानान्मस्य ब्रह्मण आदिः कारणं स पुरुषस्तं यो ब्रह्माणं विदधाति पूर्वमिति श्रुतेः । पूर्वमित्यावर्त्य । तन्मूलरूपं प्रतीत्यर्थः । त इत्युपलक्षणं । ते मे च त्वदीयं मदीयं च नमोस्त्विति । आदिपुरुषत्वे च हेतुगर्भं विशेषणमाह ॥ कार्याणामिति । जगता सर्वप्राणिजातेन कार्याणां कर्तव्यानां कर्मणां पूर्वकारणं मूलप्रवर्तकमित्यर्थः ॥ अथवा ॥ जगता अमासह सहितस्येत्यर्थः । अमा सह समीपे स्यादित्यमरः । ते त्वदीयं नमः । मा षट्सु द्वितीयेति सूत्रेण द्वितीया चतुर्थ्यर्थे मह्यमस्त्वित्यर्थः । मदीयं नमः । कार्याणां कात् ब्रह्मणः सकाशात् आर्याणां श्रेष्ठानां सृज्यानां वाऽवताराणां पूर्वं मूलभूतं कारणं आदिपुरुषं प्रति अस्त्वित्यर्थे कृते नोक्तविरोधः ॥ २५ ॥ इति श्रीभागवतटिप्पण्यां द्विपंचाशत्तमोऽध्यायः ॥ १०—५२ ॥ ॥

॥ हरिः ॐ ॥ स तावदिति । अत्र दृष्टिपातेनेति पदं व्यर्थं । असंगतत्वात् । न च दग्ध इत्यनेन युज्यते । अग्निनेत्यस्य पदस्य सत्त्वात् । न च तयोर्विशेषणविशेष्यभावः । तत्पुरुषेण बहुव्रीहिणा वा समासेन तद्योगाभावात् । नापि दृष्टिपातोऽग्निकारणं । देहजेनेत्युक्तत्वात् । देहदृष्टिपातयोरुभयोराग्निकारणत्वमपि दुर्वचं । अन्यतमस्यान्यथा सिद्धत्वात् । तस्मादयुक्तमुक्तं । अतोऽर्थांतरं । स यवनस्तावत्प्रथमं तावता पत्ताडनेन वा रुष्टस्य मुचकुंदस्य दृष्टिपातेन । उद्बोधितेनेति शेषः । देहजेन कालयवनदेहोद्भूतेनाग्निना दग्धः सन् क्षणात्तत्क्षणे भस्मसात् भस्माधीनः । भस्मरूप इति यावत् । अभवत् । अतो नासंगतं दृष्टिपातेनेति पदं ॥ १२ ॥ सार्वभौमेति । अत्र भगवता मुचकुंदं प्रति सार्वभौमेति संबोधितं । तदयुक्तं । मुचकुंदस्येक्ष्वाकुवंश्यमांधातृतनय-

त्वेनोत्तरकोसलैकदेशाधिपतित्वात् । वैवस्वतस्य हि मनोर्ज्येष्ठपुत्रसुद्युम्नेन रुद्रशापप्राप्ते स्वेलारूपे बुधजाताय पुरूरवसे सार्वभौमत्वं दत्वा स्वपुरुषरूपजातानामिक्ष्वाकुप्रभृतीनां च मांडलिकत्वं च दत्तं । अतो विरोधः । तस्मादर्थांतरमुच्यते । सार्वभौममहाराजेत्येकं पदं । सार्वभौमस्तात्कालिको धृतराष्ट्रः तस्मादपि महाराज पूज्यराजन् । तत्र हेतुमाह ॥ मातरिति । ते तव मतिः विमला निर्दोषा ऊर्जिता प्रगल्भा । धृतराष्ट्रस्य कुपुत्रसंबंधेन मतेर्निर्दोषत्वाभावात् । तदपेक्षया मुचकुंदस्यैव महाराजत्वं युक्तमिति भावः ॥ अथवा ॥ विमलोर्जितेत्येकं पदं । विशेषेण विष्णोर्वा मा ज्ञानस्य तं प्राणदेवं लांति स्वामित्वेन स्वीकुर्वंति ते विलाः देवाः । विः पक्षिपर-मात्मनोरित्यभिधानं । मा ज्ञान इति धातुः ला आधान इति धातुश्च । स्वामित्वेनेति योग्यतया संबंधः । निष्पापत्वाद्विमला देवास्तेषूर्जिता मतिरस्तीति । धृतराष्ट्रस्य तु विशिष्टो मलो येषां तेषु स्वपुत्रेषु ऊर्जिता ॥ यद्वा ॥ धृतराष्ट्रस्य मतिः विमला वौ विष्णौ मला पापरूपिणी । अकयप्रविसंभूमसखहा विष्णुवाचका इत्यभिधानं । ते युद्धविषये । तकारः कीर्तितश्चोरे मोहे युद्धे च कीर्तित इत्येकाक्षरात् । ऊर्जिता चिकीर्षा दृढाऽस्ति । अतो मुचकुंदस्य धृतराष्ट्रापूज्यराजत्वं युक्तमिति भावः । विमलोर्जितत्वे हेतुः ॥ वरैरित्यादि । अतो न विरोधगंधोऽपि ॥ ६० ॥ इति श्रीभागवतटिप्पण्यां चतुःपंचाशत्तमोऽध्यायः ॥ १०—५४ ॥

॥ हरिः ॐ ॥ अहो इति । यामत्रयेण विवाहव्यवधानमुक्तं । तस्य श्वो भाविनि त्वमजितोद्वहने विदर्भान् आनर्तादेकरात्रेण विदर्भानगमद्धयैरित्येताभ्यां विरोधः ॥ किंच श्रीमन्महाभारततात्पर्यनिर्णये । देवीति श्रीरुदीरितेत्युक्त्या देवी भाग्यात्मिका नृणामित्युक्त्या न च स्पर्धादयो दोषाः संविद्रूपां स्पृशंति तामिति तात्पर्योक्त्या च । अल्पराधस इति स्वविशेषणे दत्ते विरो-धांतरं च । अतोऽर्थांतरं । अत्र त्रियामा शब्देन न यामत्रयकालो ग्राह्यः । किंतु रात्रिर्ग्राह्या । त्रियामा क्षणदा क्षपेत्यभिधानात् । अतो न पूर्वविरोधः । मे मया सह अल्पराधसः । अल्पं राधो भाग्यं यस्य तस्य शिशुपालस्य उद्वाहः त्रियामांतरितः एकरात्र्या व्यवहित इत्यहं न वेद्मि । किंतु इदमहो आश्चर्यं वेद्मि। अत्र शिशुपालविवाहस्य त्रियामांतरितत्वकथने इदं कारणं । यत् अरविंदाक्षः कृष्णो नागच्छति । तस्यागमने तु शिशुपालोद्वाहस्य वार्ताऽपि न स्यादिति भावः । अतो विरोधांतरमपि नास्तीत्यर्थः ॥ २३ ॥ दुर्भगाया इति । अत्र दुर्भगाया इति स्वविशेषणे कृते भाग्यात्मिकाया रमारूपारुक्मिण्यास्तदयोगात् । ज्ञानरूपायाश्च भ्रमाभावादपि

विरोधोऽतोऽर्थांतरमुच्यते । लुप्तोपममिदं वाक्यं । तथा च धाता ब्रह्मा । धाताऽब्जयोनिर्द्रुहिण इत्यमरः । अमहा न मा ज्ञानं येषां ते अमा दैत्याः । मा ज्ञान इति धातोः । तान् हंतीति अमहा विष्णुः । दैत्यारिः पुंडरीकाक्ष इत्युक्तेः । ब्रह्मेशयोः प्रसिद्ध-नामनी गृहीत्वा विष्णोरेव यौगिकनामग्रहणेन । गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरिति वचनात् । स्त्रीणां स्वभर्तृप्रसिद्धनाम-ग्रहणे निषेधः सूचितः । ईश्वरो रुद्रः । ईश्वरः शर्व ईशान इत्युक्तेः । दुर्भगाया अलक्ष्म्या भाग्यहीनास्त्रियो वा नानुकूल इव मे मह्यं । नानुकूलो न किंत्वनकूल एवेत्यर्थः । धात्रादि त्रयाणां कर्तॄणां पृथगन्वयोपगमात् नानुकूलैकवचनाविरोधः ॥ यद्वा ॥ उत्तरार्धस्थवा शब्द उपमार्थो ज्ञेयः । उपमायां विकल्पे वेत्यमरोक्तेः । एवं सत्यपि भगवान् किं नागच्छतीति भावः । नन्वस्तु त्रिपुरुषानुकूल्यं तद्द्वारानुकूल्यं न स्याच्चेत्कथमिष्टसिद्धिः स्यादित्याशंक्य विमर्शयति ॥ देवीति । देवी लक्ष्मीः । देवीति श्रीरुदीरितेति वचनात् । गौरीः सरस्वतीत्यर्थः । गौरीर्मिमाय सलिलानि तक्षतीति सरस्वती श्रुतेः । दीर्घत्वान्न रेफलोपः । रुद्राणी रुद्रपत्नी । शिवा भवानी रुद्राणीत्यमरः । अत्र रुद्राणी शब्देन किं दाक्षायणी गृह्यतेऽथवा हैमवतीत्याशंक्य समाधत्ते ॥ गिरिजेति । गिरिजा हैमवती सती दाक्षायणी चोभयरूपिण्यपीत्यर्थः । अविमुखा संमुखाऽस्ति ॥ अथवा ॥ देवी वेत्यत्र इवेति प्रश्लेषः ॥ २५ ॥ इति श्रीभागवतटिप्पण्यामष्टपंचाशत्तमोऽध्यायः ॥ १०—५८ ॥ ॥

॥ हरिः ॐ ॥ अत्र प्रीतस्तुष्ट इति द्वाभ्यामर्थतः सूर्य इति द्वाभ्यां शब्दतश्च पुनरुक्तिद्वयमत उच्यते । भक्तस्य परमः सखा सूर्यः सत्राजितः प्रीत आसीदिति पूर्वान्वयः । तुष्टः सूर्यस्तस्मै सत्राजिते स्यमंतकं तदाख्यं मणिं प्रादादित्युत्तरान्वयः । पूर्वत्र प्रीतिविधानमुत्तरत्र तुष्टे सूर्ये मणिदातृत्वविधानं । अत्रोत्तरत्र प्रीतेर्विधानाभावेनोद्देश्यस्य तुष्ट इति विशेषणत्वेन योजिते आसीत्प्रादादिति क्रियाद्वयेन कर्तृद्वयावश्यकत्वेन च न पुनरुक्तिद्वयापातः । किंच सत्राजित्तनयां तन्वीमित्यत्र सत्राजिच्छब्दस्या-जंतत्वाभावेनात्रान्यत्र तु सत्राजितः किमकरोद्ब्रह्मन् कृष्णस्य किल्बिषमित्यत्राजंतत्वस्य दर्शनेनोभयथाऽपि संभवस्यांगीकारान्न विरोधः ॥ ३ ॥ प्रसेन इति । पूर्वं दुर्भिक्षमार्यरिष्टानि सर्वेऽपि व्याधयोऽशुभाः । न संति मायिनस्तत्र यद्राष्ट्रेऽभ्यार्चितो मणिरिति वाक्येन मणिसाहसचर्ये सति मायाद्यभावोक्त्याऽत्र प्रसेनादिवधकथनस्य विरोधोऽत उच्यते । यद्राष्ट्रेऽभ्यार्चितो



मणिरित्युक्तेर्मण्यर्चनस्य प्रसेनादिभिरकृतत्वाद्वधप्राप्तिः । अतो न पूर्ववाक्यविरोधः ॥ यद्वा ॥ कृष्णस्य याञ्चाभंगनिमित्तेन मणेरुक्त-सामर्थ्यपराहतेः प्रसेनादिवधप्राप्तौ न विरोधः । प्रातिकूले हरावर्थाः सर्वेऽनर्था भवंति हीत्युक्तेः ॥ १४ ॥ मणिहेतोरिति । अत्र प्राप्ता वयमिति बहुवचनाभ्यां प्रमृजनित्येकवचनेन च विरोधोऽत उच्यते । हे ऋक्षप जांबवन् वयं ते द्वारकौकसश्चाहं च वयमिह बिलप्रदेशे मणिहेतोः मणिशोधार्थमित्यर्थः । प्राप्ताः । न केवलमहमेक एवागतोऽस्मीति जानीहीति भावः । तत्रामुना बालक्रीड-नार्थमुपरि बद्धेन मणिना आत्मनः स्वस्य मिथ्याऽभिशापं प्रसेनवधमण्याहरणयोरकरणेऽपि तत्कर्तृत्वशब्दप्राप्तिं प्रमृजन् पराकुर्वन् अहमेक एव ते बिलं प्राप्त इति वचनविपरिणामेनान्वयः ॥ यद्वा ॥ इह भूमौ अस्मिन्नवतारे वा अमुना मणिना आत्मनः स्वस्य मिथ्याऽभिशापं । षष्ठ्सु द्वितीयेति सूत्रात् । इयं द्वितीयार्थे भिथ्याऽभिशापस्येत्यर्थः । प्राप्तौ सत्यां । तमिति शेषः । प्रमृज-न्मिथ्याऽभिशापमपाकुर्वन्मणिहेतोः स्यमंतककृते बिलमयमगमं । या प्रापण इति धातोः । लङुत्तमपुरुषः । अतो न वचनाविरोधः । ॥ यद्वा ॥ हे ऋक्षप ते तवायं शुभावहविधिं । अनुसृत्येति शेषः । अयः शुभावहो विधिरित्यमरः । बिलमगममित्यध्याहारः ॥ अथवा ॥ अयमिति बिलविशेषणं ॥ किंवा ॥ हे ऋक्षप योऽयं मणिः ते तव बिलं प्रमृजन् उज्ज्वलीकुर्वन्नास्ते अमुना मणिना आत्मनो मिथ्याऽभिशापं प्रमृजन्नहं मणिहेतोः मणेरेव हेतुर्मिथ्याऽभिशापापाकृतिकारणं तस्य प्राप्तौ इह बिले आगतोऽस्मीति ॥ ३१॥ इति श्रीभागवतटिप्पण्यां षष्ठितमोऽध्यायः ॥ १०—६० ॥ ॥

॥ हरिः ॐ ॥ त इति ॥ अत्र देवकीमिति मदादिभिः षड्भिर्गोविंदादिवंदनं कृतं । तत्र वसुदेवदेवकीबलकृष्णेति वयः क्रमोऽपि नास्ति । किंवा कृष्णबलदेवकीवसुदेवेति व्युत्क्रमोऽपि नास्ति । तस्माद्विरोधोऽत उच्यते । गोविंदस्य वयसांऽतिमत्वेऽपि सर्वो-त्तमत्वेनाभ्यर्हितत्वात्तद्वंदनस्य प्राथम्यं । ततो बलभद्रस्य तत्कल्पत्वेन वंद्यत्वेऽपि मातृदेवो भवेति प्रथमवंदनविधायकश्रुत्या पित्रानृण्यं भवेन्मार्ग या या व्रजनादिना तवानृण्याय योगस्तु नास्त्यतः कृपयाऽव मामिति स्मृतेश्च । लक्ष्मीनारायणाय नम इत्यादिना नमनस्य स्त्रीपूर्वकत्वेन विधानदर्शनाच्च । स्वशापोद्धारस्य देवकीप्रार्थनयैव जातत्वाच्चादौ देवकीवंदनं । ततः पितृवंदनं । व्यव-धानेन सूतिस्तु पुंस्त्वमित्यभिधीयत इत्युक्त्या पितुर्व्यवहितत्वेन कारणत्वात्ततो बलवंदनस्यापि युक्तता । अन्य मात्रुदरस्थत्वानिमि-

त्तेनांत एव नमनयोग्यत्वात् । तस्मान्नात्र कश्चिद्विरोधः ॥५६॥ इति श्रीभागवतटिप्पण्यां चतुःसप्ततितमोऽध्यायः ॥ १०—७४ ॥

॥ हरिः ॐ ॥ भवंताविति । अत्र किंकरस्येति षष्ठ्याऽन्वयेन पूर्वापरगोष्वातिगृहीतारौ प्रति भाषणात् समुद्धरतेति बहुवचनानुपपत्त्या च विरोधोऽत उच्यते । अत्र भवंतौ इति पदद्वयं तौ उभौ अविजानतः अज्ञस्य अकिंकरस्य आज्ञाधारकदासस्य भवं भद्रं प्रति कल्याणमुद्दिश्येत्यर्थः अनुगृह्णीतां अनुग्रहं कुरुतां ॥ यद्वा ॥ भवमनुकल्याणमनुलक्ष्य गृह्णीतां मयोक्तं । नो नियुतमयुतं वेति शेषः । किमेवं प्रार्थयस इत्यत आह ॥ समुद्धरतमिति । युवां अशुचौ निरये पतंतं मां आ कृच्छ्रात् अतिशयितसंकटात् समुद्धरतं । पारयतं मामिति तु अपाठः । तथैव प्रायः पाठदर्शने तु मत् तोषो हन्यतेऽनेनेति मुद्धा खेदः तेन सहितः समुद्ध इत्येकं विप्रं प्रति संबुद्धिः । रकारस्याग्निबीजत्वेन लक्षणया तज्जन्यतापं तनोति विस्तारयतीति अपरं विप्रं प्रति संबुद्धिः । एकः सखेदोऽन्यः संतप्त इत्यर्थः । हेतौ उभौ अशुचौ निरयं पतंतं मां अनुगृह्णीतामित्यन्वयः । अतो नासंगतिविरोधौ ॥ ३३ ॥ पूर्वं राज्ञा गोलक्षग्रहणे प्रार्थितत्वात् । लक्ष शब्दस्य च स्त्रीलिंगत्वाभावात् । अत्रैकवचनस्त्रीलिंगान्यशब्दसद्भावात् । विरोध एकः । उत्तरार्धे च पुल्लिंगैकवचनान्यशब्दस्य नपुंसकायुतशब्दविशेषणत्वायोगात् । द्वितीयः । अयुतस्य प्रार्थनाभावाच्च । तृतीयः । अतोऽर्थांतरमुच्यते । हे राजन् अहं नान्यामिच्छे इत्येकं पदं । अन्या न भवतीति नान्या तां प्रथमां गामेवेत्यर्थः । अत्र नञ् समासेनानन्यामिति भवितव्येऽपि न समासोपगमाद्युक्तता । प्रतीच्छे गृहीष्ये इत्युक्त्वा अस्वामी गोस्वामी न भूत्वा गामलब्ध्वेत्यर्थः । अपाक्रमत् जगाम ॥ अथवा ॥ पूर्वान्वये जगामेति शेषः । तत्र हेतुः अस्वामीति वा ॥ यद्वा ॥ स्वामी राजा अन्यमपि विप्रं प्रति गवामयुतं दशसहस्रं दातुमित्यर्थः । अपां कर्मनामसु पाठात् । प्रार्थनकर्मणा अक्रमत् उपससर्प अपरोऽपि ब्राह्मणः नेत्युक्त्वा ययौ इत्यर्थसंभवेन न कश्चिदपि विरोधः ॥ ३४ ॥ इति श्रीभागवतटिप्पण्यां सप्ताशीतितमोऽध्यायः ॥ १०—८७ ॥ ॥

॥ हरिः ॐ ॥ अहो इति । अत्र श्रीधरव्याख्यातपुस्तकेषु कालगत्या दुरत्यया इति पाठो दृश्यते । स तु दुरतिक्रमार्थकदुरत्ययशब्दविशिष्टकालगत्येत्यंगीकारे प्रथमातृतीययोर्विशेषणाविशेष्यत्वानुपपत्त्या दुरत्ययेति तृतीयाभासेन भ्रांतिकल्पित एव । न हि दुरत्ययेति तृतीया भवति । दुरत्ययेति प्रथमापत्त्या दुरतीत्युपसर्गायोपपदाय धातोरसंभवप्रसंगात् । तस्मादन्यत्र स्थितस्य

दुरत्ययमिति पाठस्यैवौचित्यं। तथापाठस्याग्रहेणांगीकारे त्वित्थं योजना द्रष्टव्या। अहो इति शब्दो मिथः कुरून्प्रति संबुत्थ्यर्थकः। आश्चर्यार्थकत्वे तदर्थकत्वपदसद्भावेन पुनरुक्ततापत्तेः। दुरत्ययेत्यत्र अतसातत्यगमने इति धातोः अति तु संततं निरंतरं। ज्ञातुमिति यावत्। गत्यर्थानां ज्ञानार्थत्वात्। योग्या अत्यादुःशब्दस्य दुर्निषेधे च दुःखेत्युक्तेर्निषेधार्थकत्वात् दुरत्या नाम दुर्ज्ञेयेत्यर्थः। तादृश्या कालगत्या इदं कुरुभ्यः उग्रसेनाज्ञापनं महच्चित्रं आश्चर्यं। वा इति शब्देनोक्तमर्थमर्थांतरोपन्यासेन दृढयति॥ आरुरुक्षतीति। उपानत् पादरक्षा मुकुटसेवितं किरीटस्थापनयोग्यं सत्किरीटं वा शिर आरुरुक्षती आरोढुमिच्छतीति। नन्वेवमर्थसद्भावादेव भ्रांतिकल्पितत्वाभावः पाठस्य कथं न स्यादिति चेन्न। टीका हि दुर्गमार्थज्ञापिका। तस्यां चेदृशदुर्गमार्थस्य ज्ञापनाभावात् भ्रांतेः सौस्थ्यादिति भावः॥ २५॥ इति श्रीभागवतटिप्पण्यां नवतितमोऽध्यायः॥ १०—९०॥ ॥

॥ हरिः ॐ॥ गयामिति। अत्र हलधरस्य गयायां पितृयजनमुक्तं। तदयुक्तं। पितुर्वसुदेवस्य विद्यमानत्वेन रामाधिकाराभावादतोऽर्थ उच्यते। पितॄन्विष्ट्वेत्यनेन न गयाश्राद्धं विवक्षितं येन जीवत्पितृकस्याधिकाराभावः। किंतु रामेण चातुर्मास्येषु विहितः साकमेधांतर्गतः। पितृयज्ञोऽनुष्ठितः। न च रामस्याहिताग्नित्वमेव नास्ति श्रुतत्वाभावादिति वाच्यं। अश्रुतत्वेऽपि अनुजस्य कृष्णस्याहिताग्नित्वश्रवणेन ज्येष्ठस्य रामस्यार्थापत्तिसिद्धेः। अन्यथा परिवेत्तृत्वप्रसंगात्। उक्तंच। दाराग्निहोत्रसंयोगं कुरुतेत्यग्रजे स्थिते परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वज इति मिताक्षरादौ। अत एव पितॄन् संतर्प्येति नोक्त। इष्ट्वेत्युक्तं। साकमेधीये बर्हिषत्प्रभृतीनामेव पितृत्वेनांगीकारान्न जनकादीनां। अत उक्तस्य नायुक्तता। नापि यात्रायां रामपत्न्यसंनिधानात्साकमेधायोगः। क्षत्रियस्य कुशहेमरचितपत्न्या चरितार्थत्वात्। साकमेधीयपितृयज्ञस्य स्त्रीभिरदृश्यत्वाच्चेति॥ ११॥ इति श्रीभागवतटिप्पण्यां सप्तनवतितमोऽध्यायः॥ १०—९७॥ ॥

॥ हरिः ॐ॥ एकमुष्टिमिति। अत्र पतिव्रतायाः स्वभर्तृप्रियभोजनेऽप्यनुमोदनं कार्यं न तु प्रतिबंधः। तत्कथं द्वितीयपृथुकमुष्टिभक्षणे हस्तग्रहणेन प्रतिबंधो रुक्मिण्याचरितः। अत्रोच्यते। भगवच्छ्रीपतेर्न्यस्तं नैवेद्यं त्वत्पुरो मया। कपिलात्मकदिव्येन चक्षुषा

त्ववलोकय । कृत्वा पवित्रं पूर्णं च तत्तत्स्वादुरसैर्युतं । नृसिंहात्मकरूपेण दिव्यघ्राणेंद्रियेण तु । तद्वस्तुनिष्ठगंधं च दिव्यमाघ्राय चिन्मय । भृगुरामस्वरूपेण दिव्यवागिंद्रियेण तु । सांत्वय श्लक्ष्णया वाचा भक्तं मामनुकंपय । महाकूर्मस्वरूपेण दिव्यजिह्वेंद्रियेण तु । आस्वादय स्वादुरसं भुंक्ष्व देव रमापते । इति नैवेद्यशेषान्नमध्ये भगवता घ्राणेंद्रियाघ्रातं भागं रमाया नैवेद्यार्थमुपन्यस्येति पंचरात्रागमकल्पलतोक्त्योः सत्त्वेनात्रेदं तात्पर्यं । अप्राकृतभागस्य भगवद्भक्ष्यत्वाल्लक्ष्मीयोग्यस्य च भगवदाघ्रेयत्वात्प्राकृतस्य च भगवद्दृश्यत्वात् । तन्मध्ये एकमुष्टिव्याजेन स्वयोग्येऽप्राकृते भागे कृष्णेन भक्षिते द्वितीये रमायोग्ये भागे मंदमोहार्थं भक्षणमिव कुर्वता कृष्णेनावघ्रातुं घ्राणसमीपे नीते सति स्वभागं मन्वानया रुक्मिण्या जांबवत्याद्यानां तद्भागानर्हत्वं द्योतयितुं मंदमोहार्थं प्रतिबंधकवत् हस्तग्रहणरूपा प्रवृत्तिः कृता । अवघ्रातद्वितीयमुष्टिरेव स्वभागत्वात् । भगवद्दृश्यभागरूपतृतीयमुष्टावन्यासां जांबवत्यादीनामर्हत्वात्तादृशचतुर्थ्याऽपि आनेतृविप्रस्त्रियादिभ्यः प्रसारार्थदानयोग्यत्वात् । चतसृणां मुष्टीनामित्थं विनियोगे यथायोग्यं स्थिते द्वितीयमुष्टे रमाकृतप्रतिबंधाभावसिद्धेर्न कश्चन दोषलेशोऽपि । रमाऽभिन्नरुक्मिण्या नायमर्थः कल्पितः किंतु वेदव्यासस्याप्यभिमतस्तादृशार्थानुकूल्येन निबद्धत्वात् । तथाहि । भगवान् एकां स्वाभिन्नां मुष्टिमितपृथुकेषु प्रातिस्विकत्वेन । व्याप्तस्वरूपभूतामिति यावत् । मुष्टिं । मुष वंचने इत्यतो वंचनहेतुभूतां लोकानां कृष्णेन साक्षात्पृथुका एव भक्षिता इति । ज्ञापिकामिति यावत् । जग्ध्वा प्रभक्ष्य । द्वितीयामित्यस्यावृत्तिः कर्तव्या । द्वितीयां स्वात्मतो भिन्नां रमामुद्दिश्येत्यर्थः । द्वितीयां मुष्टिं जग्धुं । अत्रांतर्णिच् । रमयाऽभ्यवहारयितुमित्यर्थः । सकृद्वर्णागमो वर्णविपर्ययश्च तथापरौ वर्णविकारनाशौ धातोस्तदर्थातिशयेन योगस्तदुच्यते तं पंचविधं निरुक्तमित्युक्तेस्तकारलोपः । सत् करोति स्वावग्रहणेन रमाभक्षणे प्राशस्त्यं करोतीति यावत् । आददे आघ्राणनिकटे धृतवान् तेनैव लोकानां द्वितीयामपि स्वयमेव भुनक्तीति मोहो जातः । इंगितज्ञानस्य सर्वोत्तमत्वात् । तद्वती श्रीस्तावदाकरणात्पूर्वमेव सत्वरा सती हस्तं हस्तस्थानपृथकान्जग्रहे । स्वामिचिंतितं विलंबेन करणमयुक्तमिति भावः ॥ यद्वा ॥ सर्वोत्तमपदस्थस्य सत्त्वेन स्वयं नोत्थातव्यमित्याशयेन तदनुसारमिति यावत् रमते क्रीडतीति तथा ॥ ९ ॥ इति श्रीभागवतटिप्पण्यामेकोनशततमोऽध्यायः ॥ १०—९९ ॥



॥ हरिः ॐ ॥ न प्रद्युम्न इति । केशवः कृष्णः न प्रद्युम्नः न अनिरुद्धः न रामः । च शब्दो यत इत्यर्थे । यतः कारणात् यस्य केशवस्य शक्तिमृते इति शेषः । इमे प्रद्युम्नादयः परित्रातुं न शेकुः अशक्ता आसन् । यच्छब्दबलात्स इति लभ्यते । स केशव एव तन्ममापत्यं । अविता रक्षिष्यति । अन्यः केशवेतरः कः पुमान् ईश्वरः समर्थः । न कोऽपीत्यर्थः । ननु प्राप्तस्यैव प्रतिषेध्यत्वात्प्रद्युम्नादीनां प्राप्त्यभावेन कथं प्रतिषेध इति चेत् । अपत्यरक्षणे प्रद्युम्नादीनामर्जुनशंकया प्राप्तिसंभवात् ॥ यद्वा ॥ शेकुः शक्त उदाहृत इत्यभिधानात् नान्वयासंभवः ॥ अथवा ॥ प्रद्युम्नोऽनिरुद्धो रामश्च यस्येति कर्मणि षष्ठी यन्ममापत्यमित्यर्थः । परित्रातुं रक्षितुं न शेकुरिति न किंतु शेकुः । तथाऽपि सिंधुं न नावा नावेव सिंधुमिति समाख्याश्रुतेः न शब्दस्यैवार्थकत्वात् । केशवो न केशव इव अन्यस्तदविता ईश्वरः समर्थः कोऽपि न । अतो मदपत्यावने त्वं यत्प्रतिजानासि तदविश्वसनीयमिति भावः ॥ ४८ ॥ इति श्रीभागवतटिप्पण्यां शततमोऽध्यायः ॥ १०—१०० ॥ इति श्रीभागवते पांघरीश्रीनिवासाचार्यविरचिते विरोधोद्धारे दशमः स्कंधः समाप्तः ॥ १० ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ तेषामिति । तच्च विजयध्वजीय व्याख्यानं । तेषां मध्ये । नवास्य भूमंडलस्य । नवद्वीपपतयोऽभवन् । तेषां मध्ये । एकाशीतिसंख्याता द्विजातयो बभूवुः । किं कर्माण इत्यत्राह ॥ कर्मेति । कर्मतंत्रप्रणेतारः कर्मकांडप्रणेतार इति । श्रीधरीयं च व्याख्यानं । तेषां नवसुताः । नवद्वीपपतयः नवानां ब्रह्मावर्तादिभूखंडानां पतयः । अस्य भारतवर्षस्य । एकाशीतिसुताः कर्ममार्गप्रवर्तकाः ब्राह्मणा अभवन्निति । तत्राद्ये पौराणिकमतिपरीक्षार्थं नवद्वीपपदार्थालेखनात् । द्वितीये च नवानां ब्रह्मावर्तादिभूखंडानामिति लेखनात् । शंकानिरासाभावो-

रप्यनुपयुक्तत्वं । तथाहि । पद्यस्थनवद्वीपशब्देन किं जंबूप्लक्षादीनि गृह्यंते । अथवा । भारतादिनवखंडानि । उत । ब्रह्मावर्तादि-भूदेशाः । नाद्यः । तेषां सप्तत्वेन नवत्वानुपपत्तेः । आग्नीध्रेध्मजिह्वादिप्रैय्यव्रतानां तदधिपत्वेनोक्तेश्च । न द्वितीयः । द्वीप शब्दस्य खंडार्थकत्वेऽनुशासनाभावात् । लक्षणयोपपत्तिरिति चेत् । एकस्य भरताधिष्ठितत्वेनाष्टानामेवावशिष्टतया नवाधीनत्वानुपपत्तेः । न च भरतस्यापुत्रत्वं शंक्यं । सुमत्यादीनां पंचानां पुत्रत्वोक्तेः । नापि भरतस्यात्मजः सुमतिनाभिहितो यमुहवा केचित्पाखंडिन ऋषभपदवीमनुवर्तमानमित्युक्त्या सुमतिना राज्यत्यागान्नवाधिपतित्वोपपत्तेरिति । नाभिकिंपुरुषादीनाग्नीध्रीयाणां च तदाधिपत्य-प्रसिद्धिबाधात् । न तृतीयः । तेषामपि द्वीप शब्दवाच्यत्वे प्रमाणाभावात् । भूप्रदेशानामनेकेषां सत्त्वेन नवत्वे नियामकाभावाच्च । किंच ब्रह्मावर्तादीनां नवत्वसद्भावे तन्नामानि वा तन्नामप्रतिपादकग्रंथनाम वा टीकाकारोऽभिदधीत । तदभावात्तदभावोऽपि सिद्ध्यति । न च तमनु कुशावर्त इत्यादिना तन्नामोक्तेस्तद्देशानामपि वक्तुं शक्यं । यावद्राज्ञां नामवत्त्वेन देशप्रसिद्ध्यभावात् । तात्कालिकानामस्ति प्रसिद्धिरिति चेत् । भरतपुत्रसुमत्यादीनां देशनामप्रवर्तकत्वादृष्टेः । टीकाकारेणाप्येतद्विवक्षयैवात्र ब्रह्मावर्ता-दीति लिखितमिति चेन्न । तथा विवक्षायां कुशावर्तादीति लिखेत् । प्रमाणवाक्ये कुशावर्तस्यादिमत्वोक्तेः । तस्मात्तथा लेखना-भावात्तथा विवक्षाभावोऽपि ज्ञायते । नापि द्वीप शब्दस्य मुख्यार्थायोगाल्लक्षणाश्रयणीयेति वाच्यं । पूर्वं लक्षणार्थमाश्रित्य द्वीप शब्देन ब्रह्मावर्तादिभूखंडानि कल्पयित्वा तेषां च नवत्वकल्पने गौरवापत्तेः । अपि च ब्रह्मावर्ताद्यर्थकत्वस्वीकारेऽस्य समंतत इत्यस्यासंगतिः । न हि ब्रह्मावर्तादीनां भरतखंडसमंततः स्थितिर्मध्यस्थितिः । अतो नोपयोग उभयोः । तर्ह्यस्य कथं गतिरिति चेत् । उच्यते । तेषां भरतस्य पूर्वोक्त्या शिष्टानां नवनवतिपुत्राणां मध्ये नवनवसंख्याका आर्षभारतमनु कुशावर्त इलावर्तो ब्रह्मावर्तो मलयः केतुर्भद्रसेन इंद्रस्पृक् विदर्भः कीटक इति नवनवतिप्रधाना इत्युक्त्या तत्तन्नामानोऽस्य जंबुद्वीपस्य समंततः समंतात् । परितो निखनद्भिरित्युक्तेः ॥ नवद्वीपपतयः । नवानां प्राक् प्रियव्रतकृतत्वाभावेनार्वाक् सगरात्मजैः समुद्रवेलाया-मन्वेषणार्थे निखनद्भिः कृतत्वेन च नूतनानामित्यर्थः । तथा चोक्तं । जंबुद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशंति । सगरा-त्मजैरश्वान्वेषण इमां महीं परितो निरवनद्भिरुपकल्पितानिति । तादृशानां द्वीपानां । तद्यथा । स्वर्णप्रस्थश्चंद्रशुक्र आवर्तनो

रमणको मंदरो हरिणः पांचजन्यः सिंहलोलंकेत्युक्तनाम्नां पतयः स्वामिनः। अभवन्निति शेषः। ननु सप्तमवैवस्वतमन्वंतरे तद्वंशीयसगरात्मजैरुपकल्पितेषूपद्वीपेष्वाद्यस्वायंभुवमन्वंतरे तद्वंश्यानां राज्यप्रवृत्तावुक्तायामसंभावना स्यादिति चेन्न । तात्कालिकानामिति दीर्घायुष्ट्वात्। अन्यथा स्वायंभुवमन्वंतरीयकविहर्यादिभ्यः सकाशाद्वैवस्वतपौत्रनिमेरुपदेशानुपपत्तेः। तेषां योगित्वेन कालवंचनशक्तिमत्त्वाच्च। नन्वस्तु कव्यादीनां तथात्वं। कुशावर्तादीनां तु कुत इति चेत्। तेषां नवनवतिप्रधाना इत्युक्त्या कव्याद्यपेक्षयापि श्रेष्ठत्वोक्त्या योगित्वस्यापि सिद्धेः। तद्वीपानां पूर्वकल्पीयसगरात्मजोपकल्पितत्वाद्वा यत्राक्रूरोऽध्यगात्पुरेत्यादिवत्संभावितत्वात्। वैकल्पिकपक्षे नव शब्दस्याभिनवार्थकता। अन्यथा पूर्वकल्पीयसगरात्मजैः कृतत्वेन नूतनार्थकताऽनुपपत्तेः। ननु च नवानामष्टाधिपत्यं कथमिति चेत्। सर्वैर्मिलित्वा राज्यकरणे का नामानुपपत्तिः। न ह्येकगृहस्यानेकैरविभक्तैः स्वामित्वं दुःशकं। यद्वा। तेषां समंतत इत्यावृत्त्या योज्यं। तेषां नवानां समंततः सं अभिन्नो योंऽतो निर्णयस्तस्मात्। समभेदे समीचीने सुष्ठुपूजासुखेषु चेति हि यादवः। उभयोरपि दृष्टोंऽत इत्यत्रांत शब्दस्य तद्भाष्ये निर्णयार्थकत्वेन व्याख्यानात्। नवानामप्येकनिश्चयत्वादष्टद्वीपस्वामित्वं युज्यत इति भावः। अथवा। सममिति पृथक्पदं। ततः भरतात्। अन्य इति शेषः। नवसमं सहैव नवद्वीपपतय इत्यर्थः। अपि वा। सं अंतत इति च्छेदः। अस्य जंबुद्वीपस्य। अंततः चरमभागे। सं अभेदेन। नवद्वीपपतय इत्यर्थः। इमां महीं परितो निखनद्भिरित्युक्तेः। तस्माद्द्वीप शब्दस्य समंतत इत्यादेश्च मुख्यार्थसिध्याऽयमेवार्थ उपपन्नः। किंच विजयध्वजीयव्याख्यानमपि एतमेवार्थं प्रतिपादयति। तथाहि। अस्य भूमंडलस्येति। संन्निकर्षस्थितस्य जंबुद्वीपरूपभूमंडलस्येत्यर्थः। नवद्वीपपतय इति। सगरात्मजकृतत्वान्नूतनद्वीपपतय इत्यर्थः। अपि च श्रीधरीयव्याख्यानमपि नेममर्थं विसृजति। तथाहि। नवानां ब्रह्मावर्तादिखंडानां पतयोऽस्य भारतवर्षस्येति तदीयव्याख्यानं। ऋगताविति धातोर्गत्यर्थानां च ज्ञानार्थत्वात्। ऋतं ज्ञानं। आवर्तं अवज्ञानं। ब्रह्मणि कपिलाख्ये भगवति। आवर्तं अवज्ञानं। अवज्ञेति यावत्। येभ्यस्ते ब्रह्मावर्ताः सगरात्मजास्ते। आदयः कारणानि। येषां तेषां। भूखंडानां खंडितभूप्रदेशानां स्वर्णप्रस्थादीनां। पतय इत्यर्थः। भारतवर्षस्य जंबुद्वीपैकदेशत्वेन तत्परितः स्थितत्वं च स्वर्णप्रस्थादीनां युज्यत एवेत्यत आन्वर्थक्यमेवेति विद्वद्भिः संतोष्टव्यं ॥१९॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥११—२॥

॥ हरिः ॐ ॥ यदुवंशे इति । इयं कृष्णं प्रति ब्रह्मोक्तिः । अत्र श्रीधरव्याख्यानैकशरणाः सर्वेऽपि पंचविंशाधिकामिति पदस्य श्रीधरानुक्तमपि स्वकपोलकल्पितं पंचविंशाधिकामित्यर्थं कथयंति । तच्चित्रं । तादृगर्थसिद्धौ प्रमाणाभावात् । न च शरच्छब्दस्योपवर्तमानत्वेन तादृशार्थसिद्धिरिति वाच्यं । पंचमेऽहनि षष्ठे वा शाकं पचति स्वगृहे । अनृणी चाप्रवसी च स वारिचर मोदत । इत्यत्र चतुर्धरेण अहः शब्दस्योपवर्तमानत्वेऽपि पंचमे षष्ठे वा दिने पक्वशाकादिभोजनेन जीवनायोगात् । तदर्थस्य बाधितत्त्वं मत्वाऽह्न्येकस्मिन्दिने पंचमे काले सायाह्ने वा षष्ठे काले प्रदोषे वेति व्याख्यातत्वेन बाधितस्य त्यागार्हत्वसूचितत्वात् । अत्र कथं बाधितत्वामिति चेत् । शतायुर्वै पुरुष इति श्रुत्या नृणां शतायुष्ट्वोक्तेः । अधिकार्थग्रहणे बाध एव । न च हरेरचिंत्यशक्त्या सर्वं सुघटमिति । स्वेच्छामात्रेण पृथ्वीभारापनोदनशक्तत्वादवतारग्रहणस्य व्यर्थत्वप्रसंगात् । अतो मनुष्यावतारानुसारिधर्मस्याप्यवश्यकत्वं । तर्हि गोवर्धनोद्धरणादिकं कथं संगच्छत इति चेत् । अल्पशक्तिमतोऽसंभावितत्वेऽपि अतिशक्तस्य पुंसः संभावितत्वात् । एवमप्यास्त्विति चेन्न । श्रुतिसिद्धधर्मस्यान्यथाकर्तुमनुचितत्वात् । अतष्टीकाकारश्रीधरानुक्तेश्च तादृशार्थकथनमयुक्तं । तर्हि कोऽर्थ इति चेदुच्यते । हे पंचविंशचतुर्विंशातितत्वात्मको देहो येषामस्तीति चतुर्विंशा जडदेहधारिणो जीवाः । तदपेक्षया विलक्षण इत्यर्थः । चिदानंदशरीरेति यावत् । अनेन न तवोर्ध्वलोकगमनमन्यजीववद्देहं त्यक्त्वाऽपि तु तेन सहैव । तस्य ज्ञानानंदात्मकत्वेनाभिन्नत्वादित्याशयः । तर्हि नैच्छत्प्रणेतुं वपुरत्र शेषितामिति वक्ष्यमाणस्य का गतिरिति चेत् । तत्र बलभद्रादीनामिति शेषमंगीकृत्य । अत्र भुवि शेषितं बलभद्रादीनां वपुः । प्रणेतुं ऊर्ध्वलोकं नेतुं । नैच्छदिति योजना द्रष्टव्या । अन्यथा जगतो मोहनार्थाय भगवान्पुरुषोत्तमः । दर्शयन्मानुषीं चेष्टां तथा मृतकवद्विभुः । प्रकाशयेददेहोऽपि मोहाय च दुरात्मनां । मायया मृतकं देवस्तदा सृष्ट्वा प्रदर्शयेत् । कुतो हि मृतकं तस्य मृत्यभावात्परात्मन इति प्रमाणविरोधात् । सप्तमस्कंधेऽपि नरहर उपनीतः पंचतां पंचविंशतिश्लोके पंचविंशेति संबोधनाच्च । अधिकं अधिकृतः । कः ब्राह्मपक्षः । यस्मिंस्तत् । शरच्छतं वर्षशतं । व्यतीयाय अत्यक्रामादित्यन्वयः । अनेनेदं ज्ञायते । ब्राह्मसौरार्यपक्षाणां मध्ये ब्राह्मस्य सौरापेक्षया द्विघटकोनत्वात् । मासस्य षष्टघटीसंभवेन तत्कालस्यैवाहोरात्रत्वात् । वर्षस्य द्वादशदिनान्यूनानि यदा भवंति तदा शतवर्षाणां द्वादशशतदिनोनतया तावद्दिनानां चतुर्मासाधिकव-



र्षत्रयसिध्या तेनोनशतवर्षाणि नामाष्टमासाधिकषण्णवतिवर्षाणि भवंति । तत्काले स्वस्थानगमनापेक्षया ब्रह्मप्रार्थनं । ततश्चतुर्मासाधिकवर्षद्वयस्थितिर्भूमौ । एवं नवनवतिवर्षाणि भवंति । देवकीवसुदेवयोर्जठरयोरेकवर्षं स्थितिः । एवं मिलित्वा पूर्णे शतवर्षात्मके काले भगवन्निर्याणमिति । तदुक्तं । वत्सराणां शतं चैव ऋतूनां पंचविंशकं । अवतीर्णस्य कृष्णस्य यदाऽप्रागात्तदा हरिं । स्वस्थानगमनापेक्षी ब्रह्मा तुष्टाव सामरः । संवत्सरद्वयं चैव पश्चात्स्थित्वा जनार्दनः । अभिपेदे परं स्थानं चतुर्मासाधिकं पुनरिति तात्पर्ये । अस्यार्थः । अवतीर्णस्य । श्वेतद्वीपात् । भूस्थकश्यपरूपवसुदेवमनस्यारूढस्य शुक्लकृष्णकेशांशेन तन्मनस्याविष्टस्येत्यर्थः । कृष्णस्य मेघश्याममूलरूपभगवतः । ऋतूनां पंचविशकं द्विमासाधिकवर्षचतुष्टयं । यदा । वत्सराणां वर्षाणां । शतं प्रति अप्रागात् संख्यापूरकत्वेन न प्राप । द्विमासोनषण्णवतिवर्षात्मके काल इति यावत् । तदैव । स्वस्थानगमनापेक्षी सत्यलोकनयनेच्छुः । इदं विशेषणं न केवलं ब्रह्मणोऽपि तु पश्चाद्ब्रह्मादिप्रार्थनानंतरं । जनार्दनः जनवच्छतवर्षानधिककालेऽर्दनं गमनं यस्य सः । अथवा । अजनस्य ब्रह्माणं अर्दनं याचनं यस्मै स तथा । अर्द गतौ याचनेति धातुः । चतुर्मासाधिकं संवत्सरद्वयं च स्थित्वा भुवि वासं कृत्वैव पुनः परं स्थानं । अभिपेदे जगामेति । इदमत्राकूतं । भगवतः शुक्लकृष्णरूपेण वसुदेवमनसि युगपत्प्रवेशेऽपि शुक्लकेशात्मकस्य हरेर्नवमासपर्यंतं वसुदेवे स्थितिः । ततो देवक्युदरे मासत्रयं । ततो रोहिण्युदरे सप्तमासं । ततस्तदाविष्टशेषस्य भुवि जन्म । तच्च वैशाखबहुलाष्टम्यां । यदा त्रिमासः स बभूव देवस्तदाविरासीत्पुरुषोत्तम इति तात्पर्यनिर्णयगतवाक्येन रामकृष्णयोस्त्रिमासांतरोक्तेः । देवकीगर्भबहिर्निर्गमरूपावतरणापेक्षयैव । श्रावणस्यासिताष्टम्यां रोहिण्यामर्धरात्रके इत्यादिवाक्यस्यापि पश्चात्त्रिमासांतरसंभवात् । तदैव शेषो हरिणोदितोऽविशद्गर्भे सुताया अपि देवकस्य । स तत्र मासत्रयमुष्य दुर्गया पराहितो रोहिणीगर्भमाशु । नियुक्तया केशवेनाथ तत्र स्थित्वा मासान्समजातः पृथिव्यामिति चोक्तिबलाद्युज्यते चायमर्थः । आश्विनकृष्णे वसुदेवेन देवक्यां दक्षाख्यषष्ठगर्भस्थापने कृते तदैव वसुदेवे रूपद्वयेन भगवत्प्रवेशं । ततः सप्तमे वैशाखे दक्ष जन्म । ततो द्विमासांते आषाढे देवक्यां सप्तमरामगर्भस्थापनं । ततस्त्रिमासांते आश्विने रामस्य रोहिणीगर्भप्रवेशः । ततः सप्तमे वैशाखे रामजन्म । रोहिण्यां रामगर्भप्रवेशकालात्सार्धमासद्वयांते पौषशुद्धे देवक्यां श्रीकृष्णगर्भप्रवेशः । ततः सार्धसप्तममासांते श्रावणकृष्णाष्टम्यां भगवत्प्रादुर्भावः । आविश्य

पूर्वं वसुदेवमेव विवेश तस्मादृतुकाल एव । देवीमुवासात्र च सप्तमासात्सार्धास्ततश्चाविरभूदजोपीत्युक्तेः । तस्माद्देवक्युदराविर्भाव-कालादष्टमासाधिकसप्तनवतिवर्षात्मके काले ब्रह्मप्रार्थनसद्भावेऽपि पंचविंशतितिर्नूनतासिद्धाद्विमासोनषण्णवतिवर्षातीततोक्तिस्तु वसुदेव-मनः प्रवेशरूपावतरणकालापेक्षयैव तात्पर्ये । तया वसुदेवमनसि सार्धचतुर्दशमासस्थितेः । देवक्युदरे च सार्धसप्तमासस्थितेस्ततो द्विमासोनषण्णवतिवर्षात्मके ब्रह्मप्रार्थनात् । एतत्सर्वं मिलित्वाऽष्टमासाधिकसप्तनवतिवर्षात्मककालस्य पूर्तिसिद्धेः । भागवते पूर्वोक्तकाल एव ब्रह्मप्रार्थनसद्भावेऽपि ब्राह्ममानेन द्वादशशतदिनोनतासिध्याऽष्टमासाधिकषण्णवतिवर्षमितकालातिक्रमोक्तिस्तु रामाख्यशेषाविष्टशुक्लकेशात्मनो हरेर्देवकीगर्भप्रवेशकालापेक्षया । एतदंगीकारेण देवक्युदरे रामस्य त्रिमाससंस्थितेः । ततः सार्ध-द्विमासांते कृष्णस्य देवकीगर्भप्रवेशः । ततस्तत्र सार्धसप्तमासस्थितिः । तत आविर्भावः । तत्कालमारभ्याष्टमासाधिकषण्णवति-वर्षमितकाले ब्रह्मप्रार्थनं । एतत्सर्वमेलनेऽष्टमासाधिकसप्तनवतिवर्षात्मककालस्य पूर्तिसिद्धेः । न चैकमासाधिक्यमिति वाच्यं । तद्वर्षेऽसक्रांतमासागमनेनैकमासाधिक्येऽपि तन्मासगणनौचित्यात् । ततश्चोभयत्रापि चतुर्मासाधिकद्विवर्षमस्मिंल्लोके संवासेन शता-ब्दपूर्त्या न श्रुतिविरोधगंधोऽपीति । यत्तूपादिश्यपरं ज्ञानमुद्धवायामुमाश्रमं बदर्याख्यं प्रापयित्वा सप्तमाब्दं शत्तोत्तरं । प्रतीक्षन्पाल-यामास पार्थैः सह भुवं प्रभुरिति भारततात्पर्यनिर्णायकश्रीमदाचार्यवाक्ये सप्तोत्तरशताब्दातीततोक्तिः । सा कृष्णावतारस्य बार्हस्पत्यमानेन पूर्णशतवर्षस्थितिविवक्षासत्त्वेऽपि सावनमानेन ज्ञेया । यतो बार्हस्पत्यमानगतशतवर्षेषु शतमासा एवाधिका भवंति । तेषां वर्षाणि चतुर्मासाधिकाष्टा भवंति । तत्र चतुर्मासाधिकसप्ततिवर्षाधिक्यकथने एकवर्षाधिक्यं भवति । तच्च देवकीवसुदेवगर्भ-स्थितिविवक्षयेति ज्ञेयं । अतो न कश्चिद्विरोधः ॥ २५ ॥ इति श्रीभागवतटिप्पण्यां षष्ठोऽध्यायः ॥ ११—६ ॥ ॥

॥ हरिः ॥ ॐ ॥ अहिंसेति । अत्रोभयोः श्लोकयोर्यमानां नियमानां च प्रत्येकं द्वादशत्वं भासते । तथापि द्वितीयश्लोके यमानामेकादशत्वकथनेन द्वादशत्वानुपपत्त्या विरोधापत्तिरित्यत्र केचित् । शौचस्य बाह्यांतरभेदेन द्वैविध्यं परिकल्प्य संख्यापूरण-मिच्छंति । तच्चिंत्यं । जपादेरपि सगर्भागर्भभेदसद्भावान्निर्धारणासिद्धेः । अपरे च । पूर्वश्लोकोक्तद्वादशरूपमेकं नियमं परिकल्प्य तेन नियमानां साहित्यं परिकल्प्य संख्यां पूरयंति । तदप्यसमंजसं । एते यमाः सनियमा इत्यनेन यमानां नियमसाहित्यापत्त्या

नियमानां यमसाहित्यायोगात् । तर्ह्यस्य वाक्यस्य का गतिरिति चेत् । उच्यते । एतेऽहिंसाद्याचार्यसेवनांता यमाः सनियमाः स्मृताः । नात्रान्वये द्वादशपदान्वयः । उभयोर्यमनियमयोर्मध्ये ये द्वादशतत्संख्यावंतो यमा यथा यथावदुपासिताः संतः पुंसां कामं दुहंति निश्चितं । यद्वा । सनियमा इत्यावर्त्य द्वादशयमानां विशेषणतया योज्यं । अथवा । उभयोः स्त्रीपुरुषयोर्मध्ये पुंसामेते द्वादशयमाः सनियमाः स्मृताः । पुंसामित्यनेन स्त्रीणां नियमेषु योग्यता नास्तीति ध्वन्यते । तथाहि । शौचविषये रजोदोषात् । जपे वैदिकमंत्रानधिकारात् । तपसि भर्तृसेवात्यागप्रसंगात् । होमे श्रोत्रादावविधानात् । श्रद्धायां भर्तृमतविरोधिगुर्वाद्युपदेशानंगीकारात् । आतिथ्ये स्वातंत्र्याभावात् । मदर्चने प्रतिमादिपूजनेऽनधिकारात् । तीर्थाटने भर्तृरहितगमनस्य निषिद्धत्वात् । परार्थेहायां पातिव्रत्यभंगप्रसंगात् । तुष्टौ स्त्रीणां पुमपेक्षया चतुर्गुणकामत्वात् । आचार्यसेवने उपनयनाभावादिति । तस्माद्यमेष्वेव स्त्रीणां योग्यता । तत्र । असंगः अदुष्टकर्मसंगतिः । असंचयः भर्तृप्रतारणया पदार्थसंचयाकरणं । ब्रह्मचर्यं भर्तुरन्यत्र कामाभावः । मौनं भर्तृप्रीतिसाधनमात्रभाषणं । अन्यत्समानं । अथवा । उत्तरश्लोकोक्ताः शौचादय एकादश सनियमाः । नियम शब्दगृहीतद्वादशसंख्यापूरकानियमांगभूतनियमांतरेण सहिता इति योजना । तदर्थस्तु । धृतव्रतादेरत्यागः । तत्पक्षे एतच्छब्देन संनिकृष्टस्यैव योग्यत्वान्नियमा ग्राह्याः । ते च सनियमा यमाश्चोभयोः श्लोकयोर्द्वादश स्मृता इत्यन्वयः । एतदर्थकनियमशब्दस्य द्वादशसंख्यापूरकत्वासिध्या न विरोध इति भावः । उत वा पुरुषरूपचेतनतारतम्येन बृहस्पतेर्द्वादशत्वात्तदवतारभूतस्योद्धवस्य संबुद्धिर्द्वादशेति । तारतम्यस्तोत्रे विष्णुविधिप्राणगरुडशेषरुद्रेंद्रकामप्राणानिरुद्धगुर्विंत्युक्तकोटिषु गुरोर्द्वादशकोटिगतत्वेनाभिधानाद्वा । तस्मादयं श्लोकार्थः सन्मनस्तुष्टिकारकत्वेन श्रीभगवत्तुष्टिकारकोऽस्तु ॥ ३३॥३४ ॥ इति श्रीभागवतटिप्पण्यां एकोनविंशोऽध्यायः ॥ ११-१९ ॥

॥ हरिः ॐ ॥ अर्थस्येति । अत्र स्तेयमित्यादिश्लोकोक्तानामनर्थानां त्रयोदशत्वलाभेन पंचदशसंख्योक्तिविरोधः । न च पूर्वश्लोकोक्तैः पूर्तिः । तत्र चतुर्णामायासीदीनामुक्त्या सप्तदशत्वापातात् । अत्र श्रीधरेण व्यसनमध्ये स्त्रीद्यूतमद्येति व्यसनत्रयांगीकारे पूर्तिरुक्ता । तच्चिंत्यं । स्त्रीव्यसनस्यैव कामरूपत्वात् कामोक्त्यैव तत्सिद्धेः । कितवानां छलग्रह इत्युक्तेरनृतस्यैव

द्यूतरूपत्वात्। तथा मदस्यापि मद्यरूपत्वात्। विजयध्वजाचार्यैस्तु राजादिभ्यो व्यसनानि विविधनिरसनानीति व्याख्यातं। तस्यायमाशयः। वीत्युपसर्गस्य विविधार्थकत्वं। असन शब्दस्य निरसनार्थकत्वं। उपसर्गाणां धातुषु पूर्वसिद्धस्यैवार्थस्य द्योतकत्वेनासनशब्द एव निरसनरूपार्थस्य सत्वात्। निरसनं नाम प्रतिष्ठाभंगः। राजादिभ्य इत्यत्रादिशब्देन शत्रुस्वजनौ गृह्येते। तथा च राजतः प्रतिष्ठाभंग एकः। शत्रुतो द्वितीयः। स्वजनात्तृतीयः। एवं पंचदशसंख्यापूर्तिः। न च वाच्यं स्तेयादीनामपि विविधत्वाद्व्यसनस्यैव वैविध्येन संख्यापूर्तिरयुक्तेति। स्तेयादीनां सर्वेषामेकवचनांतत्वोक्त्या वैविध्यांगीकारानर्हत्वात्। अस्यैव बहुवचनांतत्वेन वैविध्यांगीकारार्हत्वात्। नापि बहुवचनेनानेकेषामपि ग्रहणोपपत्त्या त्रयाणामेव ग्रहणे एते पंचदशानर्था ह्यर्थमूलता नृणां नियमाभाव इति। अपर्यवसित बहुत्वस्य त्रित्वे पर्यवसानामिति नियमात्। दंडनिर्यापणनिर्भर्त्सनादिरूपवैविध्यस्यानेकत्वेऽपि राजादित्रयाणामेव निमित्तभूतानां समावेशात्। प्राप्तानामेव विवक्षिततया त्रित्वोपपत्तिरिति ॥ १७ ॥ १८ ॥ इति श्रीभागवतटिप्पण्यां त्रयोविंशोऽध्यायः ॥ ११—२३ ॥ ॥

॥ हरिः ॐ ॥ कृत्वोरौ दक्षिणे पादमासीनं पंकजारुणमित्यादि। तृतीयस्कंधे चतुर्थाध्यायाष्टमश्लोके तु वाम ऊरावधिश्रित्य दक्षिणांघ्रिसरोरुहमिति पाठः। अतो मिथो विरोधः। तत्परिहाराय केचित्। पुराणेषु च वैषम्यं युगकल्पव्यवस्थयेति वाक्येन युगकल्पादिव्यवस्थां कल्पयंति। तदयुक्तं। तेन पुराणांतस्थस्यैव विरोधस्य परिहार्यत्वात्। नत्वेकद्रष्टृकस्यैकपुराणस्थस्य च। अन्यथा पुराणेष्विति बहुवचनं स्यात्। न च प्रातिस्विकेनेत्यंगीकारो युक्तः। अनुक्तस्य कल्पनया कल्पनागौरवापत्तेः। नापि च शब्देन तदंगीकारो युक्तः। तस्य निरंकुशत्वेन तदर्थे नियामकत्वाभावात्। तस्माच्छिष्टैरनंगीकृतत्वाच्च नात्र व्यवस्थौचित्यशुद्धिः। तर्हि का गतिरस्येति चेत्। उच्यते। कृत्वोरौ दक्षिणे पादमित्यत्र दक्षिणं पादमित्यंगीकारे न कश्चिद्विरोधः। न चानेकपुस्तकेषु सप्तम्यंतपाठोपलंभेन द्वितीयांतपाठोऽयुक्तः। श्रीधरव्याख्यानपुस्तकेषु तथोपलंभेऽपि अन्यव्याख्यातृकपुस्तकेषु सप्तम्यंतपाठानुपलंभात्। विरुद्धपाठापेक्षयाऽविरुद्धस्यैवांगीकारौचित्यात्। नापि दक्षिणमित्यंगीकारे ऊरोरेकांगान्यतमनिर्देशापत्तिः स्यादिति वाच्यं। दक्षिण इत्यंगीकारेऽपि पादस्य तथा वक्तुं साम्यात्। पादस्य दक्षिणत्वकथनेनैवोरोर्वामत्व-



सिद्धेश्च। न हि दक्षिणोरौ दक्षिणपादस्थापनं युज्यते। ननु तृतीयस्कंध एव वाममिति पाठोऽभ्युपगम्यत इति चेन्न। पादे समस्तदक्षिणरूपविशेषणस्य सत्त्वात्। न च तत्रापि दक्षिण इति सप्तम्यंत पाठोंऽगीकार्यः। पाठद्वयकल्पनांगीकारे गौरवात्। ननु च विदुरं प्रत्युद्धवेन स्वदृष्टस्यैव कृष्णोपवेशनस्य कथितत्वेनान्यदान्यथोपवेशनेऽपि न विरोध इति चेन्न। अपाश्रितार्भकाश्वत्थमित्युक्त्योद्धवोपदेशकालेऽश्वत्थाश्रयणस्यैवासंभवात्। गंतुं कृतधियस्तीर्थं स्यंदनान्समयूयुजन्। तन्निरीक्ष्योद्धवो राजन्स्यंदना....इत्यादिना प्रभासगमनात्पूर्वमेवोद्धवोपदेशात्। ततो महाभागवते उद्धवे निर्गते वनं। द्वारवत्यां किमकरोद्भगवान्भूतभावन इति राजप्रश्नात्। तर्ह्युद्धवेन स्वादृष्टकृष्णोपवेशनस्य विदुराय वर्णनं दुर्घटमिति चेन्न। अन्यत्रस्थस्याप्यौपगवेः कृष्णोक्तरीत्या भगवत्ध्यानेन दूरदर्शनसिद्धिसंभवात्। किंच पैतृककर्माचरणादन्यत्र दक्षिणोरौ वामपादस्थापनानौचित्यात्। वामोरौ च दक्षिणपादस्थापनस्य वीरासनरूपत्वोक्त्या योगकालोपयोगाच्च। अत एकादशे पादशब्दे द्वितीयांतपाठस्यैव युक्तत्वेन न कश्चिद्विरोधगंधोऽपीति सद्भिः संतोष्टव्यं। एवं सत्यपि तादृशपाठे स्वाग्रहं कश्चिन्नैव मुंचेच्चेत्तत्रैवं योजना वक्तव्या। वाम ऊरावधिश्रित्य दक्षिणांघ्रिसरोरुहमित्यत्र वामे सुंदरे। तथाऽमरोक्तेः। दक्षिणः सरलः। उरो वा। दक्षिणे सरलोदाराविल्युक्तेश्च ॥ ३२ ॥ इति श्रीभागवतटिप्पण्यां त्रिंशोऽध्यायः ॥ ११—३० ॥ ॥ इति श्रीभागवतटिप्पण्यां पांघरी श्रीनिवासचार्यकृते विरोधोद्धारे एकादशः स्कंधः समाप्तः ॥ ११ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥



॥ हरिः ॐ ॥ श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥ आरभ्येति। अत्रेयं योजना। हे राजन् भगवतस्तव जन्मारभ्य यावन्नंदाभिषेचनं शिशुनागानंतरिकनंदनामकस्याभिषेकपर्यंतमित्यर्थः। एतदंतरं वर्षसहस्रं पंचशतं तदपि

दशोत्तरं दशाधिकं । दशाधिकपंचशतोत्तरैकसहस्रमित्यर्थः । शत शब्दस्याव्ययत्वेन बहुवचनाभावः । शतं जीवेत्यत्रापि कारकान्वयाभावात् । परीक्षित्समकालमागधसहदेवसुतसोमापिना परीक्षिज्जन्मानंतरं तत्पितुः सहदेवस्य स्वपूर्वयुद्धसहाय्यकारित्वात्तदुपेक्षया सार्वभौमत्वं द्वादशवर्षे आक्रांतं । अत एव तत्प्रभृति बार्हद्रथानां भाव्यत्वेन द्वादशसहस्रवर्षराज्यकारित्वं । ततः पंचप्रद्योतना इमेऽष्टाविंशोत्तरशतं भोक्ष्यंति पृथिवीमिमामित्युक्त्या शिशुनागादीनां षष्ठ्युत्तरसमा भोक्ष्यंति पृथिवीमित्युक्त्या प्रद्योतनानामष्टाविंशदधिकशतवर्षपर्यंतं राज्यं । ततः शैशुभानागा दशैते ये षष्ठ्युत्तरशतत्रयं त्रिशतवर्षं राज्यं । एवं मिलित्वैकसहस्रोपरि दशाधिकपंचशतसंख्यैवं जायते । अतो न काचिदर्थानुपपत्तिः । यत्तु श्रीधरेणैतत्कालगणनं कयाचिद्विवक्षयैति लिखितं । तदयुक्तं । व्याख्यात्राऽज्ञातविवक्षाविषयकथने कृते परार्थाज्ञापनेन व्याख्यातृत्वानुपपत्तेः । यश्चानेन पूर्वसंख्याविरोधः प्रदर्शितः सोऽपि नास्ति । एकार्थप्रतिपादकत्वस्यात्र प्रदर्शितत्वात् । यद्वा । आरभ्य भगवतो जन्मेत्यत्र अजन्मेति पदच्छेदः । जन्मविरोधमरणमित्यर्थः । तदारभ्य जनमेजयेन द्वादशवर्षपर्यंतं सार्वभौमत्वं कृतं । तदूर्ध्वं सोमापि पुत्रः श्रुतश्रवः पूर्वबार्हद्रथैः कृतं । अत इमानि द्वादशाधिकसहस्रवर्षाणि प्रद्योतनानामष्टात्रिंशदधिकशतवर्षाणि शिशुनागानां षष्ठ्युत्तरात्रिशतवर्षाणि । एवं सर्वमेलने कृते दशोत्तरपंचशताधिकैकसहस्रवर्षसंख्या सिध्यतीति ॥ २६ ॥ इति श्रीभागवतटिप्पण्यां द्वितीयोऽध्यायः ॥ १२—२ ॥ ॥

॥ हरिः ॐ ॥ दशंतमिति । अत्र पादस्य दंशस्थानोक्तेः । कंठेऽदशदिति भारतोक्त्या विरोधोऽतोऽर्थांतरं । पादे स्वशरीरचतुर्थांशे । उरूपर्यंतमेकांशः । नाभ्यांतो द्वितीयांशः । वक्षोंऽतस्तृतीयांशः । कंठादिशिरोंऽतश्चतुर्थांशः । अत एकवाक्यतया न विरोधः । यद्वा । महतां हि स्वरूपं च पाद शब्देन भण्यत इत्युक्त्या पाद शब्दस्य सर्वशरीरवाचकत्वेन कंठावयवस्यापि सुग्रहत्वात् । अथवा । पंजगत्पालकं स्वरक्षकं वा विष्णुमुच्चार्यतयाऽऽददाति अंगीकरोतीति तथा तस्मिन्कंठे इत्यर्थः । उच्चारणस्य कंठायत्तत्वात् । किंवा । पादे चरणे । विषाननैः । लेलिहानं केवलं लिहंतं । प्रमितस्थाने तु तक्षकमित्यादि । उत पश्य विष्णोः आ अतिशयात् आदानेऽभ्युपगमे सति दशंतं तक्षकं न द्रक्ष्यसि । बाह्यदृष्ट्यभावादित्यर्थः । स्वशरीरस्यापि दर्शनाभावेन परतक्षकशरीरदर्शनस्यात्यंतासंभवात् । तत्र हेतुमाह ॥ शरीरंचेति । आत्मनः परमात्मनः । सकाशात् । शरीरं शीरणविकारि जडमित्यर्थः ॥ विश्वं च ।

ओहाश्विगतिवृध्योरितिधातोः । गमनकारि चेतनमित्यर्थः । तदुभयं ॥ पृथक् । भिन्नं । अत्र च शब्देन स्वात्मेतरचेतनं गृह्यते । अत आत्मनो दर्शनेऽपि तदत्यंतभिन्नस्य स्वशरीरादेर्दर्शनाभाव इति भावः ॥ ५६ ॥ इति श्रीभागवतटिप्पण्यां चतुर्थोऽध्यायः ॥ १२—४ ॥ इति श्रीभागवते पांघरीश्रीनिवासाचार्यकृतटिप्पण्यां विरोधोद्धारे द्वादशः स्कंधः समाप्तः ॥ १२ ॥ संपूर्णोऽयं ग्रंथः

॥ श्रीकृष्णार्पणमस्तु ॥



